योे अतिथिस्मिं आसीने अदत्त्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

मातलि पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे संनिधि अस्ति किंचि ।
परीत्तरूपं मम भोजनं इमं
स्यामाकप्रस्थं नलमेषो पंचानां ॥

मातलि आह ॥

सत्यं तस्य हुतं भोति सत्यं चापि समाहितं ।
यो अतिथिस्मिं आसीने दत्त्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

शक्रो पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे सन्निधि अस्ति किंचित् ।
परीत्तरूपं मम भोजनं इमं
स्यामाकप्रस्थं नलमेषो षणां ॥

शक्रो आह ॥

सरस्वतीं सो जुहोति चाहुतां गमये अपि ।

1. C yâ ati°. — 2. C natvaha kau° BC °çika krumi bhum̃°. — 3. C °rgasya sam̃panno ekâm̃ça vi°. — 4[1]. BC mâtari pi° B °krântau kau° C °krânto evam̃ samvim̃date sukham̃ | kau°. — 5. C °vikriṇâmi° C °me sannidhi asti kim̃cit | pa°.

7. C °ima syâmâshapra° BC °stham̃ nâlam e° C °sho pañcânâm̃ ‖ . — 9. C mâtari â°.
10. B satyam̃ satya hutam̃ bho° C satyam̃ satyam̃ hutam̃ bho°.

11. B °âçine da° C °âçine da°. — 12. BC natvaham̃° B °ka kruhi bhum̃° C °ka krumi bhum̃° BC °dâhi ca â°. — 13. C °rgasam̃panno eshâm̃çam̃ vi°. — 14. C °nto evam̃ savindate sukham̃ | kau°. — 15. BC na câpi san (C °sam̃)nidhi a°.

17. BC °janam̃ | i° C °syâmâshapra° BC °stham̃ nâlam eshâ(C °shâm̃) sharṇṇâm̃ ‖ . — 20. BC °svati so ju° B °juhâti câhadâm̃ gama° C °câhu âgama° L °câhutâm̃ sama° BCL °mayâm api | .

यो अतिथिस्मिं आसीने दत्त्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रू[117 a]मि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

कौशिक आह ॥

उदारवर्णा इति ब्राह्मणा इमे
अयं च वो सुनखो किस्य हेतु ।
उच्चावचां वर्णनिमां निदर्शये
आख्याथ मे को नु भवे भवन्तो ॥

शक्र आह ॥

चन्द्रो च सूर्यो च इहागता ते
अयं च सो मातलि देवसारथिः ।
अहं च शक्रो त्रिदशान ईश्वरो
अयं च सो पंचशिखो . . . . . ति ॥
यस्यैष प्रतिगृह्णाति अन्नं च पानं च कौशिक ।
पाणिस्वरं कुम्भथूनं मृदंगानां स्वराणि च ।
सुप्तं न प्रतिबोधेन्ति प्रतिबुद्धो च नन्दति ॥

. . . . . . . . . . . . . . . . . . . . . . . .

तुवं नो ज्ञाती पुरिमासु जातिषु
त्वं कौशिका मत्सरिपापधर्मः ।
तुह्यानुकंपाय इहागता स्म
मा पापधर्मो निरयं व्रजेसि ॥
ये मत्सरी रोषकपापधर्मा

1. B ye tithi° C yâ tithismim̃ açine da° B °âçîne adatvâ°. — 2. BC natvaham̃ kauçika krumi bhum̃°. — 3. C °rgasya sam̃panno°. — 5. B °hmaṇa i ° kho kimasya hetuḥ | C °kho kima hetuḥ | .

7. B °ccâcavo varṇṇa° C °ccâvaco varṇṇa ° bhâm̃ darçaye na âkhyâ° B °rçaye nanu âkhâtamesho nu bha° C °ko anubha°. — 10. C °ihogatau ayam̃° B °hâgato ayam̃° C °mâtarî de°.

12. C °çânam îçva° B °çâna içva° BC °ro | ayam̃° C °yam̃ ca pam̃caçirshoti | yasyai° B °pam̃caçishoti || yasyai°. — 14. B °kauçikaḥ pâṇi° C °çika pâṇi°. — 15. B °mbhabhûyam̃ mṛi° C °mbhatûṇikam̃ mṛi° BC °dam̃gâham̃ varâṇi su°.

16. BC suptânâm̃ pra ° nti | pratibu°. — 18. BC °jñâti pu° B °purimosu jâtishu | tvam̃° BC °çiko matsa° B °tsarîyâpadharmaḥ tu° C °tsarirashakapâpadharmâ tu° — 20. B C °sma | mâ°.

22. B °dharmo pra° C °çravaṇâbrâ° BC °ṇânâm̃ pâ°.

प्रद्वेषका श्रमणब्राह्मणानां ।
पापानि कर्माणि समाचरित्वा
इतो च्युताः ते निरयं व्रजन्ति ॥
ये चेह दानानि ददन्ति पण्डिता
प्रसन्नचित्ताः श्रमणब्राह्मणेषु ।
पुण्यानि कृत्वा इह जीवलोके
इतो च्युतास्ते सुगतिं व्रजन्ति ॥

कौशिक आह ॥

एषो अद्यैवं करिष्यामि पुण्यं
दास्यामि दानं श्रमणब्राह्मणेषु ।
एतेहि दद्यादहमन्नपानं
नाहं अदत्त्वा अमृतं पि पास्ये ॥
एवं च मे ददतो सर्वकालं
भोगा च मे व सर्वा चिपिहन्ति ।
ततो अहं सुगतिं प्रव्रजिष्यं
प्रहाय कामानि तथाधिकानि ॥

नगोत्तमे गिरिवरगन्धमादने
मोदेन्ति देववराधिपात्मजा ।
उपागता ऋषिवर सर्वि पूजितुं
सुपुष्पितां द्रुमवरशाखां गृह्णिय ॥
शुचिं सुगन्धां चिदशेहि सत्कृतां
सुपुष्पितां अमरवरेहि सेवितां ।

2. C pâpâṇi dharmâṇi° B °rmâni sa° C °ito cuto te nilayaṁ° BC °janti yad iha dâ°. — 4. C °ni dadâti pa° C çravaṇabrâ° B °brâhmaṇabrâhma°.

6. C °ita cyu°. — 9. B °dyaiva karishye pu° C °rishya pu ° çravaṇabrâ°.

11. C °hi ete dânaṁ dadyâ nâhaṁ° L °hi ete dadayehi dânaṁ nâ° B °dyâd dânaṁ nâhaṁ° BC °adatvâ amṛi° C °pipâsâ | . — 13. C °bhogâya ca me° BC °me vâ sarvâ kshipi-(C °prî)hanti | L °me vâ sarva kshipihanti | . — 15. BC °ahaṁ pravrajishyâmi prahâ° C °dhikâmâni nago°.

17. BC °ragaṁdhamâ° B °dane | mo° C °modanti deva amarâdhi°. — 19. B upâgamâ ṛi° C °game ṛi ° sarvapû ° gṛihniya çu° B °gṛihniya çu°.

21. BC çuciṁ | sugandhâ trida ° tkṛitâ supushpilâ ama° B °sevitâ tâṁ° C °sevitâḥ tâṁ°.

शाखां ददेन्सुर्नम अस्तु मारिष
यथैव मो शक्र तथैव सो तुवं ॥
तां याचमानां अनुद्ब्रवि ब्राह्मण
इत्यश्रीषि कलहं उदीरये ।
न मह्यं पुष्पेहि इहार्थं विद्यति
या येव वो श्रेयतरा (गृह्णातु) ॥
तदियं त्वं एव समीक्ष ब्राह्मण
जानाहि मो मारिष या नु श्रेया ।
यस्यैव नो मारिष तां दयिष्यसि
सा एव नो श्रेयतरा भविष्यति ॥
अकार्यमेतं वचनं सुगात्रिका
स ब्राह्मणो क्रोधशब्दं वियाहरे ।
गत्वान भूताधिपतिं हि पृच्छथ
सो एव वो ज्ञास्यति या नु श्रेया ॥
तदापि तायो परमार्थदर्शिनो
उदारिका वर्णवरेण अर्थिका ।
गत्वान वोचन्त्रिदशाधिपस्य
जानाहि मो मारिष का नु श्रेया ॥
तान्दृष्ट्वा अ[117ᵇ]नात्तमना पुरंदरो
इत्यब्रवीत् आत्तमनो सर्वेषु ।
..... युष्मे सदृशा सुगात्रिका

1. B tâm̃ hi çâkhâm̃ dadet sarvam̃gamâsi mâ° C tâm̃ hi çâkhâm̃ dada sarvâdgamâsi mâ° C °thaivam̃ mo ça°. — 3. B tâm̃ pâcamâ° C °mânâm anu° BC °hmaṇa | i° C °bravîmi kalaham udi°. — 5. B °hyam̃ pujyam̃ pushpe° C °hyam̃ punyam̃ pushpe° BC °yâ yeca bodha çreyatarâ sopi ta°.

7. BC °yam̃ tvâm̃ eva° B °mîkshe brâ° C °hmaṇâ jâ° BC °nâhi mârsha jânu çreyâ ya°. — 9. C yasya evam̃ naḥ mârisha tvadadishyasi° B °syaiva ro mârisha tvam̃ dayi° BC °shyasi | sâ° C °evam̃ no çre°.

11. BC °triko brâhma° C °hmaṇam̃ krodhaça° BC °bdam̃ vyâkare tvâna°. — 13. C °patim̃ hi pṛi° B °patim̃ hi mṛicha° BC °tha | so eva(C °vam̃) vo jñâtisya(C °sye)ti yâ tu çreyatarâ pi tâ°. — 15. B °rika varṇṇabalena ° arthiko tâ gatvâ° C °varṇṇabalena ° arthiko âgatvâ°.

17. C °tvânaivam avo° BC °vocat | tri ° hi mâm̃ mârsha kâ°. — 19. C °purandaro° BC °vit | â ° rveshu yushme°.

21. B °dṛiço su° BC °sugâtreko rtheḥa pûrve ka° C °rayet | .

को येहपूर्वं कलहं उदीरये ॥
यो सर्वलोके चरति महामुनिः
नामेन सो नारदो सत्यविक्रमो ।
सो अब्रवीत्पर्वते गन्धमादने
गत्वान भूताधिपतिं हि पृच्छथ ॥
इतो सो उत्तरतो दिशायां
गंगाय कूले हिमवन्तपार्श्वे ।
सो कौशिको दुल्लभपानभोजनो
तस्य सुधां प्रेषयि देवसारथिः ॥
अग्निं जुहन्तस्य प्रतिष्ठतो मम
प्रभंकरो लोकतमोनुदो यथा ।
आदित्यलोकस्मिं तथैव ईर्यसि
का देवता किस्य इहागतो सि ॥
शंखोपमं श्वेतअतुल्यसन्निभं
मनोज्ञगन्धं प्रियरूपदर्शनं ।
न दृष्टपूर्वं मय चक्षुषेदृशं
का देवता किन्तु ददासिदं मम ॥
अहं महेन्द्रेण महर्षि प्रेषितो
सुधाहरिं त्वां त्वरितं उपागमि ।
जानाहि मां मातलिं देवसारथिं
भुंजाहिमां कांक्षिषु भोगमुत्तमं ॥
भुक्ता हिमां द्वादश . . . . हि पापका
क्षुधापिपासां अरतिं ज्वरं क्रमा ।

2. BC °niḥ mâmena ° kramo so a°. — 4. BC °vît ‖ parvate° C °rvate andha°.

6. C °uttarâto° C °gam̃gâkûle°. — 8. BC °jano | ta° C °rathi a° B °rathiḥ a°. — 10. B agnijuha° C agnihutam̃ tasya pratisthato° B °tishṭato°.

12. C °yathaivam̃ ishyasi kâ° B °smim̃ yatheva iryasi° C °vatâ kasya ihagatâ si | . — 14. BC °khopamâm̃ çeta° C °tamatulyasam̃nibhâ mangandhâm̃ pri° B °samnibhâm̃ manogyagandhâm̃ pri° BC °rçanâm̃ na dṛi°.

16. BC °pûrve ma° C °mayam̃ cakshuḥ edṛiçakâ de° BC °vate kin tu adâ° C °dâsidam̃°. — 18. C °ndreṇa mârsha preshitâḥ su° BC °sudhâtari mâm̃(C °mâ) tvari°. — 20. C °mâtari de° B °tali deva° C °hi mâ kâm̃° B °bhojam u° C °bhojanam uttam̃ | .

22. BC °dvâdaçehi pâ° C °pakam̃ kshu° B °pakât kshudhâ° BC °pipâçâm̃ ara ° kramâ kro°.

क्रोधोपनाहं च विवादपैशून्यं
शीतोष्णतन्द्रीतरसं च उत्तमं ॥
न मातले कल्पति मह्य भुंजितु
पूर्वे अदत्त्वा इति ब्रुवन् अनुत्तमं ।
न चापि एकस्य न मह्य वर्णितं
असंविभागो हि सुखं न विन्दति ॥
मित्रं ओपायिकं पारिपन्थिका
स्त्रीघातका ये पहरन्ति अर्थं ।
सर्वे पि ते मत्सरिने समा मता
प्राप्तं अदत्त्वा अमृतं पि नासे ॥
ता प्रेषिता देवराजेन आत्मजा
कन्या चतस्रो तपनीयसन्निभा ।
सुधां पि आदाय प्रतिग्रहार्हां
तं आश्रमं यत्र अभूषि कौशिकः ॥
दृष्ट्वा तु ताः अर्थदर्शी मतीमां
प्रभासयन्तीयो अनन्तराश्रिताः ।
स्थिता चतस्रो प्रमदा चतुर्दिशं
सो दानि कौशिक अध्यभाषिथ ॥
पुरिमां दिशन्तिष्ठसि देवते त्वं
अलंकृता तारवरा व ओषधी ।
पृच्छामि ते कांचनवेदिविग्रहे

1. B °vivâdupai° C °vivâdan paiçunya çi° B °nyaṁ çitoshṇatantrivarasaṁ° C °ndrivarasaṁ°. — 3. B na pàtale° C °mạtare kalpayati mahyaṁ bhuṁ° B °iti kruvan° C °iti dhruvaṁ nuttamaṁ càpi°. — 5. C °mahyaṁ va° BC °vallitaṁ | asaṁ° C °bhâgaṁ hi su° BC °ndati mi°.

7. B mitraṁ ohi pàrishaṁ ṛthikà strighà° C mitra oparipattikà strighâtakà° BC °kà ye svapanti arthaṁ (C °ṛtha) te sa°. — 9. B °matsarite paṁcame samanta prà° C °matsari paṁcame samatà prà° BC °prâptàṁ(C °ptà) àdatvà amṛitaṁ pi no ase | .

11. B tàṁ pre° C tàṁ devatà pre° B °tapanipasaṁnibhàṁ | C °nnibhàṁ | . — 13. BC sudhâpi à° C °grahântàṁ âçra° B °rhàṁ tàṁ à ° shi koçikâṁ || . — 15. B °shṭvântu tâḥ° C °shṭvântu tàm athadarço matimâṁ° B °rço patimàṁ pratibhàsayanti paṁcânaṁtare çritaḥ sthi° C °pratibhàsayati paṁcanaṁtare çito sthi°.

17. C sthitâḥ ca° BC °pramudà ° rdiçaṁ | so° C °çiko adhyabhâshito | B °shitha pu°. — 19. C °diçaṁ tishṭhasi devata tvaṁ° BC °tvaṁ | a° B °kṛito gâtravarâ ca auçarà pṛi° C °kṛito tàravelà ca osarà pṛi°.

21. C pṛichati te kàṁcanadevadi° B °he || à° C °khyàsi me tvaṁ° B °vatà çi°.

आख्याहि मे त्वं कतमासि देवता ॥
शिरी हमस्मि मनुजेषु संमता
अक्षुद्रसत्त्वा परिसेविनी सदा ।
सुखेषिणी तुह्य सकाशमागता
तं मां सुधाये वरप्रज्ञ भागय ॥
शीलेनुपेतं चरणेन बुद्धिये
उपेतसत्त्वं प्रगुणेन कर्मणा ।
त्वया उपेतो शिरिजातिमन्तिया
प्रेषेति दासं विय भोगवां सुखी ॥
अथो पि दासो अलसो अशिल्पको
सुदुर्गतो वापि नरो अरूपवां ।
त्वया उपेतो शिरिजातिमन्तिया
तदिदमसाधु यदिदं त्वया कृतं ॥
प्रभा[118a]सयन्ती यशसा यशस्विनी
मनोरमेशाह्वयनां दिशां प्रति ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
श्रद्धाहमस्मि मनुजेषु सम्मता
अक्षुद्रसत्त्वा प्रतिसेविनी सदा ।
सुखेषिणी तुह्य सकाशमागता
तं मां सुधाये वरप्रज्ञ भागय ॥
भार्यापि मे खो सदृशा हि सत्कृता

2. BC °m asmiṁ ma° C °shu sammatâḥ a° B °tâ | a° C °satvo parise° B °satva parisatvaparise° BC °sadâ su°. — 4. BC °kâça âga° B °tâ | taṁ mâ su° C °taṁ sâ su° B °sudhâya vara ° gaya çi° C °gayah çi°.

6. C çicenu° B çilemupe° BC °petâṁ ca° B °buddhiḥ | ye u° C °ye | upete sa° BC °satvâ pra° C °rmaṇâḥ tva° B °ṇâ tva°. — 8. C tvayopetaṁ giriyântimântiyâṁ preshitâ saṁ viya° B °manti ‖ yâ preshati dâ° C °sukhiṁ | B °khî atho°. — 10. BC °çilpa | tâṁ sudugatâ vâpi° C °narâ anupavâṁ | B °naro rûpavâṁ tva°.

12. B °pete jâti° C °petaṁ yâtimanteya ta° BC °tad idaṁ susâdhu | ya° C °idaṁ tvâyâ°. — 14. B °sayanti yaça° C °sayanti yad idaṁ yaçasâ° BC °manomayâ sâhvayanâ diçâṁ°.

16. C °ciksha ma tvaṁ°. — 18. C çuddhâha° B çrarddhâha° BC °m asmiṁ ma° C °shu saṁmatâ | a° B °tâ | a° C °tivediya sa° BC °sadâ su°. — 20. BC °kâça âga° B °taṁ mâṁ sudhâya vara° C °taṁ sa suddhâya ca prajñâṁ varabhogaya | .

22. B °me sho sa° C °dṛiçâbhi satkṛi° BC °tkṛito kalyâ ° rmâya pa(B °pra)tivratâya | .

कल्याणधर्मा च पतिव्रता च ।
प्रहाय स्वकुलं धीतरा च
करोति श्रद्धां पुन कुम्भकारिये ॥
शीलं श्रुतं चापि अथापि संयमं
श्रद्धा सती यत्र . . . . एकदा ।
नैषा सावद्येन विघातदर्शना
तदिदमसाधु यदिदं त्वया कृतं ॥
सा मे व सन्तिके अपि च वद्यसे
विजाने मूढासि धूर्तानुवर्तिनी ।
न एदृशी अर्हति आसनोदकं
कुतो सुधां गच्छ न मे त्वं रोचसि ॥
अहाति रात्री अरुणस्मिं उन्नते
सा तिष्ठसे तारवरा व ओषधी ।
पृच्छामि ते कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
मृगीव भ्रान्ता सरभाय वर्जिता
निराकृता मन्दं ममं अवेक्षसे ।
का ते सहाया मृदुगात्रि लक्षते
न भायसे एकिका तुवं देवता ॥
न मे सहाया इह आगता कौशिक
. . . . . प्रवरास्मि देवता ।
आशा सुधाये इह आगतास्मि

2. BC °ya sukula dhîtarâya ka° BC °punaḥ ku° B °mbhakâ | çiye | . — 4. B °samcamam̃ | çra°.

6. C °darçinâ BC °tad idam̃ asâdhu yad itam̃ tva°. — 8. C tameva° B mane va° BC °api vâdyase vivarja(C °rjji)nâ madhurânuvarttanâ(C °no) | . — 10. B °edriçau arha° BC °daka kuto | sudhâga(C °ṅga)cha na°.

12. B °râḍi a° C °râtri aruṇesmim̃° BC °smim̃ ûhate sa ti° C °ravanâ ca osari | B °varâ ca oçarî(?) | . — 14. C °vedavi° B °ksha se tvam̃°.

16. C °ntâ sarvâm̃ pravrajitâ° B °saravâya va° C °kṛitâ vandâmi ave° B °manda mi ave°. — 18. B kânte sahâye mṛi° C kâm̃ te sahâyo mṛi° B °tri rakshita na bhâ° C °lakshati na bhâ° BC °kâ tu deva°. — 20. BC °çika masakka(C °satku°) sârapra° B °varasmi de° C °varasmim̃ de°.

22. C âsâ su° BC °dhâya iha° C °tâsmim̃ tam̃ sudhâ° B °jña bhâkaya (*corr. en* bhâgaya ?) | C °bhâgayâ | .

तस्मे सुधाये वरप्रज्ञ भागय ॥
आशाय क्षेत्राणि कृषन्ति कर्षका
सपुत्रदारा संघटन्ति एकतो ।
नं वर्षं हरति असनी च उत्थिता
तदिदमसाधु यदिदं त्वया कृतं ॥
आशाये एके मनुजा धनार्थिका
नावां समारुह्य तरन्ति (सागरं) ।
आलम्बने तत्र सीदन्ति अथापि च
दुःखं निगच्छन्ति विनष्टपुण्या: ॥
सा मे व सन्तिके अपि च वक्ष्से
विजाने मूढासि धूर्तानुवर्तिनी ।
न एदृशी अर्हति आसनोदकं
कुतो सुधां गच्छ न मे त्वं रोचसि ॥
का दृष्टासि ..... पिनद्धमंजरी
सीहांगदा कांचिप्रमृष्टधारणी ।
कुशाग्ररक्ता सुपिनद्धकुण्डला
उशीरवर्णा प्रतिभाय शोभसि ॥
गते यथा प्रावृषि अत्र सारदे
असंकृता लोहितमालिनी .... ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
हिरीयमस्मि मनुजान सम्मता
अक्षुद्रसत्त्वप्रतिसेविनी सदा ।

2. B °ya kshatrâ° BC °rshakâ | sa ° dârâ pi saṁ ° ekadâ nam°. — 4. BC nam esha harati | asa° BC °tvayâ na kṛi°.

6. B açâyise ke ma° C âsâyike ma° BC °taranti âlamba(C °bhya)°. — 8. C âlaṁbhyate ta° B °mbate ta ° nti | athâ° BC °pi ca evaṁ duḥkhaṁ° C °gachati vi° B °nti | vi° BC °shṭaprapuṇyâḥ(C °ṇyâ) sa me°. — 10. BC sa me va santi api° BC °vijânâmi mûḍho si dhû° B °varttini | .

12. BC na etâdṛiçani arha°. — 14. B kâ drashṭrâsu pi° C kâ na draṁshṭrâsu pi° C °ddhamaṁjalî siṁhaṁ° BC °gadâ(C °jâ)kâṁcupramṛi(C °sṛi)shṭa°.

16. C °ṇḍalâḥ udinavaprati° B °bhati | . — 18. BC kâle yathâ° C °tra çârade° B °mâlini | C °lini pṛichâ°. — 20. B °kâṁcavedi° C °vatâḥ hi°.

22. C °m asmiṁ ma ° na saṁmatâ° B °mmato a° BC °drasatva(B °tvo)parise°.

सुखेषिणी तुह्य सकाशमागता
न तु त्वां शक्नोमि महर्षि याचितुं ॥
कावर्णधातु इह स्त्री न विद्यति
जानामि धर्मेण सुगाचि लक्षसे ।
ते तां अयाचन्तिये प्रसवाम्यहं
सुधाम[118b]हं जीवितं तं ददामि ते ॥
त्वामेवहं कांचनवेदिविग्रहे
आमन्त्रयित्वान प्रवेक्षि आश्रमं ।
त्वामेवहं सर्वगुणेन पूजये
तव अदत्त्वा अमृतं पिं नो अलं ॥
तं आश्रमं पुष्पविचित्रसंस्तृतं
द्विजेहि घुष्टं रुचिरस्वरेहि ।
सा सुच्छवी तं च प्रविष्टा आश्रम
उदकुपेतं फलमूलशोभितं ॥
वृक्षाग्रणीनां बहवो सुपुष्पिता
साला पियाला पनसा च तिन्दुका ।
शोभांजना लोध्र ..... पाटला
सुपुष्पगन्धा मुचिलिन्दका च ॥
कुवला तमाला बहवो सुवेशनं
अश्वत्थन्यग्रोध तथैवुदुम्बरा ।
तिलका कदम्बा च तथैव चम्पका
प्रसातिका श्यामक तत्र तण्डुला ॥

1. C °kheshi tuhya° B °kâça âgatâ° C °gatâḥ na° BC °na tvam̃ çakno° C °knoti ma° yâvi° BC °tum̃ kâva°. — 3. BC °striya vidya° B °dya vidyati | jâ° C °lakshaṇe ta tvam̃ ajâcanti°. — 5. B te tvam̃ ayâcam̃ti pravasa mahyam̃ su° C tatvam̃ ajâcanti prasava mahyam̃ su° BC °mi te tvam e°.

7. B tvam eva° C tvam eham̃° BC °vekshya âçramam̃ tvam e°. — 9. BC tvam eva° BC °tvâ amṛito pi no°.

11. C tam âçra° B °ghuṭam̃ ru° rehi sâ°. — 13. C so su° B sâ suchâvî° BC °pravishṭa âçramam̃ | udakenupe° bhitam̃ vṛi°. — 15. C °kshâgramânâm̃ ca ba° B °kshâgrâṇâm̃ ca ba° BC °shpitâm̃ | sâ° C °sârâ piyaçâ pana° BC °ndukâ soham̃ja°.

17. C °janodhramṛiduyashṭhipâtalâ su° B °dhramaka pâṭalâ || su° BC °supaṇya° cilim̃dakena kovâlâ ta(C °vâ ta)molâ ba°. — 19. B kovâlâ tamolâ ba° C kovâ tamolâ ba° B °nuveṇanan || açva° C °çanan açva° grodhra tathai° BC °thaivâdumbaro tila°.

21. C tilako kaṇâdâya tathai° B °kadapyâya tathai° mpakâ | prasâdita syâmoka°.

तत्रापिनद्धप्रावृतो कुशामयो
सुपुण्यगन्धो अजिनोपसेवितो ।
आशीतकुर्वी हरते निषसो
निषीद् कल्याणसुखेन आसने ॥
तस्येतवाये कुषिचाय कौशिकः
जयेत्तमानये जटायन्तं धनेन ।
नेहि पात्रेहि सुधां स्वयं ददे
सा अध्यभांषि त्वरिता महामुनिं ॥
तं संप्रति गृह्याण प्रीतमानसा
इत्यब्रवी आत्तमना जटाधरं ।
कृता त्वया कौशिक मह्य पूजा
गच्छामि दानि त्रिदशान सेवितुं ॥
सा कौशिकेनानुमता बुतीमता
जिगीषमाणा त्रिदशां उपागमि ।
गत्वान सा अवच सहस्रदर्शनं
इयं सुधा वासव यो हि मे जयो ॥
सो तत्र यो प्रेषित एव मातलि
परिवृत्तो देवसभाय अग्रतो ।
हिरी सुधां केनभिलब्धे हेतुना
इत्यब्रवी त्वं पुनरेवमाह्वय ॥
तं सो वताराद्विनिवर्तयेद्रथं

1. BC tatrâninadha° C °mpakâḥ prâsâdita syâmoka ta° C °ṇḍulo ta° B °ṇḍulà ta° B °kusâmayo° C °noyasevi° BC °sevino | . — 3. B °kurvvi ha° B °sharṇṇo nashîda° C °sharṇṇo ni° BC °âsanaṁ | . — 5. C °vâyeshu pi câ ° çiko jaye temâna°.

7. C nehi yautrehi su° B °yaṁ daye (?) || so a° C °dadeyaṁ | sâ adhvabhâ° BC °tvaritàṁ ma°. — 9. BC °gṛihya pri° B °mânaso i° C mânasya ity abravît | âtta° BC °dharaṁ kṛi°.

11. BC kṛitvâ tvayâ° C °gachâmi dadâmîti | tridaçâyaṁ jayaṁ sevi so kau° B °dâmi ti tridaçâjaṁ yasevi || . — 13. B °kauçikinânu° C so kauçikino numa° BC °dyutimatâ(C °to) jayeshamâ° C °mânàs tridaçâm upâ°. — 15. C °na sâvaca ° vâsamayehi° B °vâsa ca yehi° BC °jaye | .

17. BC °tra preshitam eva mâtaliṁ pari° C °vṛito de° B °tto | devasahâya° C °ya amrato hi° B °grato hirî°. — 19. BC °kenâtila° C °labdha he° BC °hvayaṁ || .

21. C taṁ ca so vadânâd vini° B °so vadanâd vini ° thaṁ | jà ° daṁ samanta° BC °yasaṁnibhaṁ pra°.

जाम्बूनदं सन्तपनीयसन्निभं ।
प्रज्वाल्यमानं रविकरसंनिभं
अलंकृतं सुवर्णबिम्बविचित्रं ॥
गताश्च हस्तिकपिव्याघ्रद्वीपियो
मृगा च वैडूर्यमया उपागता ।
तं पुष्कला ज्योतीरसमया शुभा
मणीवैडूर्यमया च ईदृशा ॥
हेष्टा मनेसी उपरिं च कुप्सरं
सुवर्णचन्द्रा च रथे उपागता ।
तं यानश्रेष्ठं अभिरुह्य मातलि
दश दिशायो अभिनन्दयेत् महीं ॥
नगांश्च शैलांश्च वनस्पतीं च
ससागरां कम्पमानां वसुन्धरां ।
सो क्षिप्रमेव त्वरितं उपागमि
तमाश्रमं यत्र अभूषि कौशिको ॥
सो मातलि . . . . . . . .
दूतो अहं पृच्छति ते पुरंदरो ।
शिरीय श्रद्धाय च आशायापि च
हिरी श्रेया केन गुणेन मन्यसि ॥
. . . . . . . . . . . . .
. . . शिरी मे प्रतिभाति मातलि ।
श्रद्धा अनित्या पुन देवसारथि

2. B °ravikâra° C °ravikâçasannibhaṁ° B °rṇṇavicitramaṇḍalaṁ | . — 4. C °hastika-vyâghra° BC °mṛigâta vai° C °gatâṁ | B °gatâ taṁ pu°.

6. BC °shkarâ jyotirasamayâ subhâ ma° C °shkarâ jyotirasâmayâ çubhâḥ ma° BC °mantravaiḍû ° yâ tva (C °tvam) îdṛiçâ he°. — 8. B °manesi u° C °pariṁ ca° B °kupseraṁ° BC °raṁ savarṇṇacandrâvarathe° C °gatâḥ | . — 10. BC °çreshṭam abhi° C °bhirûhya mâtarî da ° ndaye mahîṁ || .

12. B °spatîṁ sasâ° BC °garâṁ prathamâni ca va° C °vasuṁdharâṁ so° B °ndharâṁ so°. — 14. B °tvaritaṁ âçramaṁ° C °yabha abhû ° çikaḥ | B °çiko so°.

16. BC so mâtali(C °ri) dûto° B °dûto haṁ pṛi° C °ahaṁ ca pṛi° BC °purandaro çi°. — 18. C °rîya çuddhâ° BC °ddhâya âçâ° C °çâyam api ca° BC hiriçriyâṁge(C °yâṅge) na gu° C °guṇe ca manyase | .

21. C çirî me °mâtarî çra° B °tali çra°. — 22. C °ddhâ atityâ yana deva° B °punar deva° BC °sârathiḥ âsâṁ visaṁ° B °vâdidikasayantâṁ mama hirî° C °vâdidiçâṁ samantâ mama hiri°.

आशा विसंवादिकसंयता मम ॥
हिरी मनापा परिशुद्धकेवला
संग्रामशीर्षे न रता प्रवर्जिता ।
विपक्षमाना सुर[119ᵃ]भी उपद्रुता
हिरिर्निवारेति स्वचित्तमात्मनो ॥
हिरीह श्रेष्ठा मनुजेषु मातलि
दहरे कांक्षति महल्लिके च ।
प्रियं च भ्रातृव्यं करोति चण्डं
हिरिर्निवारेति स्वचित्तमात्मनो ॥
को ते इमां कौशिक दृष्टम् ....
उग्रो हि इन्द्रो अथवा सहांपति ।
इन्द्रो तव इन्द्रसगोत्र कांक्षति
तस्यैव भावसहव्रतानुज ॥
स कौशिकः तं जहियान उच्छ्रयं
शीलोपपेतो असधुर्यभूतो ।
पुण्यानि कृत्वा विपुलानि आश्रमे
कायस्य भेदात्स्वर्गेषु मोदति ॥

स्यात्खलु पुनः भिक्षवो युष्माकमेवं अन्यो सो तेन कालेन तेव समयेन नारदो नाम ऋषि अभूषि कौशिकसगोत्रो । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं

2. BC °manâpaṁ pa° BC °kevalaṁ saṁ° C °çîrshyeṇa rato pravrajitâḥ vi° B °çîrsheṇa rato pravrajitâ | .— 4. BC vipuṇyamâ° B °rabhi u° C °rabhir upadrutâḥ hiri nivâre° B °hirir nirvâre ° tmane hiri° C °tmano ko te imâṁ kauçika dṛishṭam ugrâhi indro athavâ sahâmyati indro tava indrasagotrikâ hirîr nivâreti svacittam âtmane hirîha çreshṭâ°.

6. C hirîha° BC °çreshṭâ ma° C °mâtarî dahareti kâṁ° B °mâtaliḥ da° BC °kâṁkshati ma° C °maharddhikâya pri° B °llikâya pri°. — 8. BC priya bhrâtari striya(C °yaṁ) karoti chandaṁ purushâ hi(C °di) durgatâ hi nivâ° B °ttam ânmanoḥ || . — 10. BC °kauçikaḥ dṛi° C °dṛishṭvam ugra hi° B °ugrâ hi ° thavâ mahânyati indro° C °sahâpati indro ° sagotri kâṁkshati | tasyaiva°.

12. C indro tavendro sagotri kâṁ° B °sagotri kâṁ° BC °bhâvâsahavratânuksha sa° (C °nuja ça)°. — 14. B °taṁ kâhiyaçam u° C °taṁ jâhiyasam uchayaṁ | çî° B °yaṁ | çîlâpa° BC °bhûto puṇyâ° B °petaṁ asadhṛijjubhû° C °petaṁ asadhûrjjabhû°.

16. BC °çrame | kâ° C °rgeshu vadati syâ°. — 18. C °puna bhikshavaḥ yu ° m eva sa syâd anyaḥ sa tena° B °m evam anya sa tena° C °abhûmi kauçikago° BC °tro na°. — 19¹. C °khalvevaṁ drashṭaṁ | . — 19². C °hetor ahaṁ° B °toh ahaṁ°. — 19³. C ahaṁ sa bhikshavo tena kâ ° yena nâlado nâma° C °çikasagrotro | .

सो भिक्षवस्तेन कालेन तेन समयेन नारदो नाम ऋषिरभूषि कौशिकगोत्रो ॥ स्यात्खलु पुनर्भिक्षवो एवमस्या अन्या सा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता आसि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोर्भिक्षवो । एषा एव यशोधरा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता अभूषि । तदापि एषा मम ह्रीयायन्ती अल्लीना । एतरहिं पि मम एषा ह्रीयायन्ती अल्लीना ॥

समाप्तं मंजरीजातकं ॥

भिक्षू भगवन्तमाहन्सुः । कथं भगवं यशोधरा न शक्यति तोषयितुं ॥ भगवता कुमारभूतेन कन्यानामलंकारां पि विश्राणयन्तेन यशोधरायै शतसहस्रमूल्यं हारं दिन्नं । सा च आह । एत्तकमात्रं अर्हामि ॥ कुमारेण भूयो शतसहस्रमूल्यं अंगुलीयकं दिन्नं तथापि न सन्तुष्यति ॥ कथं यशोधरा अतृप्ता न शक्यति राधयितुं ॥ भगवानाह ॥ एषा भिक्षवो यशोधरा न इदानीमेव अतृप्ता अन्यदापि एषा अतृप्ता ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा सुप्रभो नाम राज्यं कारयेसि । तस्य कुमारो सुतेजो नाम कृतपुण्यो महेशाख्यो निवातो सुखसंस्पर्शो पूर्वालापी प्रियभाषी अमात्यानां भट्टबलाग्रस्य श्रेष्ठिस्य नैगमस्थानां सर्वस्य इष्टो बहुमतश्च ॥ राज्ञो उत्पन्नो । इमो सर्वजनकायो कुमारस्य गुणगृहीतो कदाचिदेते मम जीविताद्व्यपरोपयित्वा कुमारं राज्ये प्रतिष्ठापयेन्सुः । तेन रा[119 b]ज्ञा सो कुमारो विप्रवासितो ॥ सो दानि कुमारो भार्याय सार्धं अनु-

2. C °kshavaḥ evam asyâd anyâ° C °ndrasya hiri nâ°. — 3[1]. C °d evaṁ tad drashṭa° BC °vyaṁ tat ka°. — 3[2]. BC °kshavo e°. — 4. BC eshâm eva(C °vaṁ) yaço° C °ndrasya hiri°. — 5[1]. C °ma hriyayâyanti° B °yantri alli°. — 5[2]. BC etahiṁ pi° C °eshâṁ hriyâyanti alli° B °shâ hriyâyantrî allinâ ‖ .

7. C iti çrimahâvastuavadâne mañjalijâtakaṁ samâptaṁ ‖ . — 8[1]. C bhikshu bha° B bhikshûr bhaga° C °hatsuḥ ‖ B °nsuḥ ka°. — 8[2]. C °gavan yaço°. — 8[3]. C °tena kaṁnyânâ° B °nâma tvaṁ kâlâ pi vi° C °kârâṇi viçrâṇamante ° dharâya çata°. — 10[2]. C ettakâmâtraṁ arhâpi ku° B °rhâmi ku°. — 10[3]. B °dinna tathâ° C °na saṁtushyati | .

11. B °kyati rodhayituṁ ‖ C °kyati bodhayituṁ ‖ . — 12[2]. B esho bhi° C esho hi bhi° BC °dharâ idânîṁ(C °nî) atriptâ a(C ° ‖ a) nya° C °pi ca eshâ° B °esho a°. — 14. C °rvaṁ hi bhi ° titem a° BC °vârâṇasi kâ° C kârayasi | . — 15. C °sujâto nâma° C °vâto mukhasaṁ° BC °bhâshiṇo amâ° B °bhaṭavalâ° C °ṭṭavalâgrâsya çre° BC °ishṭo | ba ° taçca râ°.

17[1]. BC °nno i°. — 17[2]. C °mârasya sarvaguṇa° BC °d vyavaropa ° payetsuḥ | . — 18. C °râjño so°. — 19. B °rddhaṁ | anu° C °anyatasmiṁ° C °triṇakuṭṭi ca parṇṇakuṭṭiṁ kri° B °vasati | mû° C °kena pâyanto su ° râhamâtsâni° B °paribhujanto ‖ .

हिमवन्ते अन्यतरस्मिं वनखण्डे तृणकुटिं च पर्णकुटिं च कृत्वा प्रतिवसति मूलपत्रफलोदकेन यापेन्तो सुखोपपन्नानि च मृगवराहमान्सानि परिभुंजन्तो ॥ तस्य दानि आश्रमातो [निर्गतस्य] मार्जारेण वठरां गोधां मारेत्वा तस्य भार्याये अग्रतो निक्षिपित्वा गतं ॥ सा तां गोधां पाणिनापि च न स्पृशति ॥ कुमारो मूलपत्रफलानि आदाय आश्रमं गतो पश्यति च आश्रमे तां गोधां रौद्रां वठरां । सो तां राजधीतां पृच्छति कुतो इमा गोधा ॥ सा आह ॥ एषा मार्जारेण आनीता ॥ कुमारो आह ॥ किं दानि एषा गोधा सिद्धा ॥ सा नं आह ॥ गोमयो ति कृत्वा न सिद्धा ॥ कुमारो आह ॥ न एषा गोधा अभक्ष्या भक्ष्या एषा मनुष्याणां ॥ सा दानि गोधा तेन कुमारेण निर्छविकृत्वा पक्वा । पचित्वा द्रुमशाखायामोलंबिता ॥ सा चास्य भार्या घटमादाय उदकहारिं गता । गच्छामि अहं उदकमाहरिष्यामि । ततः आहारं करिष्यामि ॥

ताये तां गोधां पक्वां समानां दृष्ट्वा वर्णसंपन्नां च गन्धसंपन्नां च अलूहां च प्रत्यग्रां च अभिलाषमुत्पन्नं । कुमारस्यापि ताये भार्याये एतदभूषि । एषा राजधीता इमां गोधां असिद्धां हस्तेनापि न इच्छति स्पृशयितुं । यत्र च वेलां पक्वा ततः अभिनन्दति भोक्तुं । यदि एताय मम मूले प्रेमा भवे तदेषा गोधा मया फलहारगतेन सिद्धा भवेया । नास्या अतो गोधाये किंचित्संविभजिष्यं गोधां परिभुंजिष्यामि ॥ तेन सा गोधा ताये राजधीतरे उदकहारिं गताये खादिता राजधीता च उदकघटमादाय आगता ॥ सा दानि कुमारस्याह ॥ आर्यपुत्र कहिं सा गोधा ॥ कुमार आह ॥ पलायिता ॥ सा चिन्तेति । कथं पक्वा गोधा वृक्षशा-

2. BC °mâto mârjjâ° C °reṇa jaṭharâ go° B °vaṭharo go° BC °godhâ mâre° kshipetvâ gataḥ(C °to) ‖ . — 4[1]. C °nâpi na spṛi°. — 4[2]. C °gatâ paçyati ca âsamanto go° BC °drâm̃ japarâm̃ | . — 5. BC °imâm̃ godhâ ‖ .

6[1]. C sâ âha ‖ kim̃ dâni°. — 6[2]. B eshâm̃ mâ°. — 7[2]. BC °dâni teshâm̃ go° B °godhâm̃ siddhâ sâ nam̃°. — 7[3]. C sâ tam̃ âha ‖ . — 7[4]. BC gometi kṛi° C °siddhâḥ ‖ . — 8[2]. C °esho godhâ abha° kshyâ na mânushâṇâm̃ | . — 9[1]. BC °ṇa nicchavi(C °vi)kṛitvâ° C °paktâ paci° B °kvâ paci°. — 9[2]. BC °çâkhâyam olam̃vitâ | (C °tâḥ). — 10[1]. C °gatâḥ ga°. — 10[2]. C gachâmyaham̃° C °shyâmaḥ | .

11. C tato âhâ°. — 12. C °paktâm̃ samâ° gandhasam̃pannâ ca rûhâm̃° B °gandhasam̃pannâm̃ ca ruhâm̃° C °pratyagrâ(*ou* çrâ?)hâm̃ ca° BC °tpannam̃ ku°. — 13[2]. B °icchati | na spṛiçayitum̃ | . — 14. B °pakvâm̃ tataḥ° C °pakvâm̃ tam̃to abhi° B °bhoktum̃ yadi°. — 15. C °premnâ bhavet tad e° BC °premnâ bhaved etâm̃ go° B °godhâm̃ ma° veyâ nâ°.

16. B nâsya ato° C nâsya gato godhâye kicit sam̃° bhum̃jishyâ | . — 17. C °go tâye râjadhîtâye° C °khâdito | râ°. — 18[2]. C °kahim̃ sâ dho ‖ . — 19[2]. C °yito sâ° B °yitâ sâ°. — 19[4]. B °çâkhâyem â° C °çâkhâyam â°.

खाद्यामालम्मा पलायिता ति ॥ तस्या राजधीताये एतद्भूषि । नाहं कुमारस्य दृष्टा ॥ तस्या तं दौर्मनस्यं हृदयं प्रविष्टं ॥

सर्वसत्वा मरिष्यन्ति मरणान्तं हि जीवितं ।
यथाकर्म करिष्यन्ति पुण्यपापफलोपगा ॥
नरकं च पापकर्माणो कृतपुण्या च स्वर्गतिं ।
अपरे च मार्गं भावेत्वा निर्वास्यन्ति अनाश्रवाः ॥

सो दानि राजा सुप्रभो कालधर्मेण संयुक्तो । अमात्येहि सुतेजो कुमारो वनातो आनेत्वा राज्ये वाराणसीयं अभिषिक्तो ॥ [120a] राज्ञो सुतेजस्य देवीय मूले न किंचिदपरित्यक्तं । न किंचित्तत्र राज्ये रत्नसंमतं । सर्वं देवीये उपनामेति यानि वस्त्राणि उदाराणि आभरणानि हारार्धहाराणि तानि देवीय उपनामयति न च शक्नोति आराधयितुं । ताये च नं गोधा हृदयं गता ॥ तस्य राज्ञो सुतेजस्य भवति । अहं देवीये न सा किंचिद्गुणजाती यां न करोमि न सा किंचित्प्रियता यां न दर्शेमि न च शक्नोमि तोषयितुं ॥ सो तामाह ॥ देवि अहं तव न किंचिद्गुणजाती यां न करोमि न सा च प्रियता यां न दर्शेमि न च शक्नोमि तोषितुं न परिबुद्ध्यामि किमत्र अन्तरं । जल्पतु देवी ॥ सा दानि देवी तं सुतेजं राजानं गाथया वाध्यभाषति ॥

अद्यापि ते तं वनस्मिं अवबुद्ध्यामि क्षत्रिया
यस्य ते धनुहस्तस्य सानुबद्धकलापिनो ।
ओलम्बा द्रुमशाखायां पक्का गोधा पलायिता ॥

राजा आह ॥

नमे नमन्तस्य भजे भजन्तं

1[2]. BC °rasya na ishṭâ ta°. — 2. B tasya taṁ° C tasyaivaṁ daurmanasya hṛi°. — 3. B °shyanti paraçântaṁ hi jivitaṁ | C °ṇântaṁ jîvitaṁ | . — 4. C °shyati pu° BC °lopamâ | . — 5. C narakaṁ pâpa ° ṇyâçca sva°.

6. C °bhâvayitvâ° BC °tvâ parinirvâ°. — 7[1]. B °yukto amâ°. — 7[2]. BC °tyehi sujâto ku°. — 9[1]. BC °mataṁ sa°. — 9[2]. C sarva de ° devîye upa° BC °upamayati°.

11[2]. B yâye ca° C yâyer ca naṁ°. — 12. BC °jâti yaṁ na ka° C °romi mânasâ kiṁcin pri° BC °yatâyaṁ na° C °çaknoti tosha°. — 13[1]. BC so tam âha ‖ . — 13[2]. BC devi ahaṁ° BC °jâti yaṁ na ka° B °romi | rità ca priyatâmana darçe° C °romi iti tâṁ ca priyatâmanaṁ darçe° C °paribadhyâmi kiṁ atra anantaraṁ ja° B °ntaraṁ jalpa°. — 15[2]. B °gâthâya câdhyabhâ°.

17. BC adyâpi me taṁ° B °taṁ tavasmiṁ ca badhyasmi kshetriya yasya° C °taṁ vâsmiṁ ca badhyasmiṁ kshetriya ya ° stasyâ sânubaddhasya karâpito ola° B °ddhasya kalâpito ola°. — 19. C °dhâ parâyitâ ‖ .

21. BC name nametasya bha° B °je bhajaṁtaṁ kṛitânukâ | rîyasya ka° C °nukârîyasya kâreya°.

कृतानुकार्यस्य करेय अर्थं ।
असंभजन्तं च न संभजेय
नानर्थकामस्य करेय अर्थं ॥
त्यजे त्यजन्तं सततं न गच्छे
अपेतभावेन न संवसेया ।
द्विजो द्रुमं क्षीणफलं विदित्वा
अन्यं परीक्षेय महां हि लोको ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यो सो तेन कालेन तेन समयेन सुतेजो नाम राजा अभूषि । न खल्वेवं द्रष्टव्यं ॥ तत्कस्य हेतोः ॥ अहं सो तेन कालेन तेन समयेन वाराणसीयं सुतेजो नाम राजा अभूषि ॥ अन्या सा राज्ञो सुतेजस्य देवी अभूषि अग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । एषा सा भिक्षवः यशोधरा राज्ञो सुतेजस्य देवी अग्रमहिषी अभूषि । तदापि एषा अतृप्ता न शक्यति तोषयितुं । एतरहिं पि एषा अतृप्ता न शक्यति तोषयितुं ॥

इति श्रीगोधाजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः । भगवता कुमारभूतेन उद्याने कन्यानामाभरणानि वि-श्राणयन्तेन यशोधराये एव बहुकं दिन्नं ॥ भगवानाह ॥ न भिक्षवो इदानीमेव मया यशोधराये बहुकं दिन्नं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा राज्यं कारयति $[120^{b}]$ कृतपुण्यो महेशाख्यो संगृहीतपरिजनो दानसंविभागशीलो महाबलो महाकोशो महावाहनो । तस्य तं राज्यं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकी-

2. C tasam̃ bhajantasya na sam̃° BC °na sam̃bhajeyâmânartha°. — 4. B °ntam̃ sa tam̃ na ga° C °sam̃vatsareyâ | .

6. BC dvijâ dru° B °anya parikshe° C °anye parikshe° BC °loke ‖ . — 8. C °d anyaḥ so te° B °shi na° C °bhûshi | tadâpi na khalve dra°. — $9^{2}$. BC °hetor aham̃°. — $9^{3}$. C °ham̃ sa tena° C °vârâṇasyâm̃ su°. — 10. BC °bhûshi ‖ agra° C °mahîshi na° B °hishi na kha°.

$11^{2}$. BC °devi agra° C °mahîshi°. — 12. BC °toshâyitum̃ ‖ . — 14. C iti çrîmahâvastuavadâne godhâ°. — $15^{1}$. BC bhikshu bha°. — $15^{2}$. C °vatâ rabhûte ° ne kam̃nyânâ ° çrâmantena° BC °rîye sarvam̃ bahukam̃°.

$16^{2}$. B °idânîm̃ evam ayam̃ yaço° C °m evam̃ maye yaço°. — $17^{2}$. BC bhikshu â° C °âhatsuḥ | . — 18. B °kshavaḥ bhû°. — 19. C °çâkhyo susam̃gri° BC °vâhano tasya°.

21. C °râjyam̃ sphîtam̃° B °bhiksham̃ ca câki° C °câkîrṇṇajanamanushyam̃ ca praçântajanamanushyam̃ ca praçâ° B °daṇḍabhramara suni° C °skaravyavahârasampannam̃ | .

णंजनमनुष्यं च सुखिबहुजनमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करं व्यवहारसंपन्नं ॥ तस्य दानि राज्ञो पञ्चशतमन्तःपुरं । तस्य या अग्रमहिषी सा सर्वस्यान्तःपुरस्यातीव प्रासादिका च दर्शनीया च पण्डिता च विधिज्ञा च सर्वकलासमन्वागता च ॥ सो राजा अभीक्ष्णं अन्तःपुरस्य वस्त्राणि च आभरणानि च विश्राणेति । तस्यापि राज्ञो शतसहस्रमूल्यो हारो आबद्धको तस्य च हारस्य मध्ये मणिरत्नं यत्र चत्वारि महाद्वीपा दृश्यन्ति जम्बुद्वीपो पूर्वविदेहो अपरगोदानीयो उत्तरकुरुः सुमेरुश्च पर्वतराजा । अनेकशतसहस्रमूल्यं तं मणिरत्नं तस्य महाहारस्य मध्ये ॥ तां देवीं पृच्छति आभरणानि विश्राणेन्तो ॥ देवि अतीव त्वं मे मनं हरसि । को च उपायो येन देवी मे मनं हरति ॥ सा दानि देवी तं राजानं गाथयाध्यभाषति ।

चेष्टालीलासमाचारा निमित्तस्य च ग्राहणं ।
कौतूहलेन चपलास्त्रिभिरारज्यन्ति पार्थिव ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन काशिराजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवस्तेन कालेन तेन समयेन काशिराजा अभूषि । अन्या सा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा सा भगवती यशोधरा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी अभूषि । तदापि एतस्या मया बहुं दिन्नं ॥

इति श्रीयशोधराये हारप्रदानजातकं समाप्तं ॥

यदा बोधिसत्वो अकामकानां मातापितॄणामश्रुकण्ठानां रुदन्मुखानां हस्तोत्तं

2[1]. BC °ḥpuraṁ tasya°. — 2[2]. C °gramahishyâ sâ sa ° syâtîvaṁ prâ° BC °nvâgatâ ca so râ°. — 4. C °vastrâṇi câbha°. — 5. C °mûlyo âro âba° BC °sya ca hâramadhye° C °çyanti jaṁbudvî ° godâvali utta° B °godâvari utta° C °kuru sume ° râjo a° B °râjâ ane°.

7. C °madhye râjâ tâṁ° B °madhye tâṁ°. — 8[1]. BC °pricchati | â° B °çrâṇanto de°. — 8[2]. BC devî ati° C °tvaṁ mama manaṁ°. — 9[1]. C °devî mama mana harati | . — 9[2]. B °gâthâyâdhya° C °gâthayâ bhâ°.

11. B ceshṭhâli° BC °ca gûhanâ | . — 12. B °lena ca harâs tri° C °lena ca râjâ strîbhi° BC °bhir ârâjyanti pârthi(C °pâthi)vaḥ || . — 13. B °kshavaḥ || yu° C °d anyo sa te°. — 14[1]. C °khalevaṁ dra°. — 14[2]. BC °hetor ahaṁ°. — 14[3]. C °kshavo tena kâ° BC °samayena kâçirâjasyâgra° C °mahishi abhûshi | na kha°.

16[3]. B °bhavati yaço° C °vati yaço ° râjasya 'gramahishî°. — 17. C °bahu dinnaṁ || . — 19. C iti çrimahâvastuavadâne yaço°. — 20. BC °kravarttîrâ° C °râd anagâriyaṁ pra° B °codhara de°.

च चक्रवर्तिराज्यमपहाय अलूहं च गृहवासमपहाय अगारादनगारिकां प्रव्रजितो तदा यशोधरा देवदत्तेनोच्यते ॥ मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि ॥ सा दानि न इच्छति बोधिसत्वमेव अभिकांक्षति । सुन्दरनन्देनापि वुच्चति । मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि । तस्यापि न इच्छति बोधिसत्वमेवाभिकांक्षति ॥ यदा भगवां प्रवृत्तधर्मचक्रो तदाहिं ए[121a]तं भिक्षुभि श्रुतं । भिक्षू भगवन्तं पृच्छन्ति । कथं भगवं यशोधरा सुन्दरनन्देन च देवदत्तेन च प्रार्थयन्ती न इच्छति भगवन्तमेव प्रार्थेति ॥ भगवानाह ॥ न भिक्षवो इदानीमेव यशोधराये सुन्दरनन्देन च देवदत्तेन च प्रार्थयमाना न इच्छति मम एवाभिकांक्षति । अन्यदापि एषा एतेहि प्रार्थयन्ती न इच्छति मम एवाभिकांक्षति ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने हिमवन्तपादमूले सर्वेषां चतुष्पदानां समागमो अभूषि ॥ अस्माकं राजा नास्ति चतुष्पदानां राजा स्थपीयतु ॥ तहिं तेषामुत्पन्नं थपीयतु चतुष्पदानां राजा त्ति प्रवरं ॥ ते आहन्सुः । को दानि चतुष्पदानां राजा स्थपीष्यतीति ॥ तेषां दानि उत्पन्नं । यो अस्माकमितो सप्तमं दिवसं सर्वप्रथमं हिमवन्तं पर्वतराजं गमिष्यति सो चतुष्पदानां राजा भविष्यति ॥ ते एवं समयं कृत्वा ततो प्रदेशातो येन हिमवन्तो पर्वतराजा तेन प्रधाविता ॥ तेषां सर्वेषां पृष्ठतो कृत्वा व्याघ्री हिमवन्तं पर्वतराजानं अनुप्राप्ता ॥ व्याघ्री हिमवन्तं पर्वतराजानं गत्वा चतुष्पदानां प्रतिपालेति ॥ चतुष्पदा च सर्वे हिमवन्तं पर्वतराजमनुप्राप्ता । तत्र च तां व्याघ्रीं पश्यन्ति प्रतिपालेन्तीं ॥ ते दानि चतुष्पदा तां

3[1]. BC so dâni° B °cchati | bo° C °m evaṁ abhi°. — 3[2]. C °nâpi cucyati B °ccati mama°. — 4[1]. BC °mahishî°. — 4[2]. C °icchasi bo° m evaṁ âkâṁ° B °m evâkâṁ°. — 5. C °gavân pravṛi ° cakraḥ tadâhim etaṁ bhi° B °tadâhi etaṁ bhi ° taṁ bhi°.

6[1]. B bhikshu bha° C bhikshur bhaga ° cchati | . — 6[2]. C °gavan yaço ° ttena prâ° BC °rthayanti na i° C °m evaṁ prâ°. — 8. BC °idânîṁm e° C °m evaṁ yaço ° ttena prâ°. — 9. B °prâyanti° C °prâpayanti na i°.

11. C °pûrva bhikshavaḥ atî ° bhûmi | . — 12[1]. B asmâkaṁ râjâ nâsti catushpadânâṁ samâgamo abhûshi || asmâ° C °sthâpishantu ta° B °sthâpîyantu tahiṁ°. — 12[2]. BC °teshâṁm utpa° C °tpanaṁ thapîyantu tahiṁ teshâṁ utpannaṁ thapîyantu | catushpadânâṁ râjâ sthapishyatîti catu° B °piyantu catu° BC °râjânti pravaran te âha°. — 13[1]. C °âhatsuḥ ko dâ° B °nsuḥ ko dâ°. — 13[2]. C °sthâpayishyati | . — 14[1]. BC °nnaṁ yo°. — 14[2]. B °sarve pratha° C °sarvaṁ pratha ° tarâjânaṁ gami° BC °mishyati || so°. — 15. BC °himavantaṁ parva° C °dhâvitâḥ | B °dhâvitâ teshâṁ°.

16. BC °prishṭato kṛi ° jânaṁ anuprâpto(C °ptaḥ) vyâ°. — 17. C °tipâlayati | . — 18. C °catuḥpadâ° C °prâptaṁ | . — 19[1]. BC °paçyati pratipâlenti te dâ°. — 19[2]. B °shpadânâṁ tâṁ° C °shpadâṁ tâṁ° B °shṭvâ cettasaṁjâ° C °shṭvâ catussaṁjâ° B °rmanâ isti°.

व्याघ्रीं दृष्ट्वा आर्तसंजाता दुर्मना । इस्त्रिया स्म पराजिता न च कहिंचित् इस्त्रियो राजा सर्वत्र पुरुषा राजा । यथा अस्माकं न अलिकं भवेय पुरुषो च राजा भवेय ॥ तेहि सा व्याघ्री उक्ता ॥ भद्रे यं तुवं पतिमिच्छसि सो चतुष्पदानां राजा भविष्यतीति ॥ तां व्याघ्रीं ऋषभो अल्लीनो ॥ भद्रे मम पतिं वरेहि । अहं लोके मंगलभूतो मम गोमयेन देवकुलानि उपलिप्यन्ति देवकार्याणि च क्रियन्ति ॥ सा दाणि व्याघ्री आह ॥ नाहं तव पतिं इच्छेय त्वं फालेहि च शकटेहि च नित्यभग्नप्रलग्नो ॥ हस्तिनागो पि तां व्याघ्रीं उपसंक्रान्तो आह ॥ भद्रे अहं बलवांश्च संवृद्धकायो च संग्रामेहि च अपराजितो मम गृह्णाहि ॥ व्याघ्री आह ॥ न हि त्वं सिंहे गर्दमाणे न उच्चारप्रस्रावं मुंचमानो पलायसि ॥ सिंहो पि मृगराजो अल्लीनो ॥ भद्रे मम पतिं [121b] वरेहि मम सर्वे मृगसंघा त्रसन्ति ॥ व्याघ्री आह ॥ मृगराज मूर्ध्ने पि पतिता प्रतीच्छामि ॥

चतुष्पदानां सर्वेषां महा आसि समागमो ।
आराजकमिदमस्माकं को त्र राजा भविष्यति ॥
हिमवन्तं पर्वतराजं यो मो प्रथमो गमिष्यति ।
इतो सप्तमे दिवसे सो यं राजा भविष्यति ॥
सिंहा व्याघ्रा मृगा चैव हस्तिनो वृषभा वृका ।
न शक्नुवन्ति अन्वेतुं गता प्रथमा पर्वतं ॥
प्रासादिकं दर्शनीयं हिमवन्तं नगोत्तमं ।
गत्वान व्याघ्री प्रथमं प्रविचारेति चतुष्पदां ॥
गत्वा चतुष्पदा सर्वे व्याघ्रीं पश्यन्ति ते तहिं ।

1. C ishṭiyâsya | palâyitâ na ca kahiṁcid ishṭiyâ râjâ sa ° rusham asmâ° B °rusho râjâ purusham asmâ°. — 2. BC °alikaṁ bhaveyo | puru°. — $3^2$. C °dre yan tuvaṁ istri icha° B °tuvaṁ maṁntri icchasi | so ca°. — $4^1$. C °vyâghrim ṛisha° BC °llîno bha°. — $4^2$. C °pati vare°. — $4^3$. C aha loke maṅgala° B °maṁgalaṁ bhû ° uparishyanti° C °upalishyanti°. — 5. C so dâni°.

6. C °tvaṁ pharehi ca° B °tvaṁ phalehi° BC °bhagnaṁ pra° B °lagno hasti°. — $7^1$. C °âha ca | . — $7^2$. B bhadre ca ahaṁ° C °balaṁvâṁ ° ddhakâye ca saṁ ° parâhitoma° BC °gṛihnâhi ‖ . — $8^2$. C °ne na uçrâvapraçrâvaṁ°. — 9. BC °llîno bha°.

11. R °mûrddhne pati praticchâmi catu° C °mûrddhnena patati praticchâmi | . — 12. C °âsi samâgato ârâ° B °game | . — 13. B °shyasi | . — 14. B °râjânaṁ yo° C °râjonaṁ yo me prathamaṁ ga° B °shyati | siṁha°. — 15. C °ptama diva°.

16. BC siṁha vyâ° B °vyâghro mṛi° BC °mṛigo vaihasti ° shabho vṛikâ na°. — 17. B na ca çakneti anyetuṁ ga° C na ca çaknoti | anyetud gatâ prathamaṁ pa° B °thama parva°. — 19. C °maṁ prativâleti | ca°. — 20. BC °vyâghrî pa ° hiṁ dṛi°.

दृष्ट्वा च अर्ह्दिता अभूषि इस्त्रिये स्म पराजिता ॥
न अस्ति स्त्रियो राजानो न च मो अलिकं भवेत् ।
यं व्याघ्री पतिमिच्छेय सो यं राजा भविष्यति ॥
मम गोमयेन कल्पानि देवकार्याणि क्रियन्ति ।
ऋषभो अवच तत्र मम भद्रे पतिं वरेत् ॥

व्याघ्री आह ॥

नित्युत्थितं सदा किलान्तं शकटेहि लांगलेहि च ।
नो तादृशं पतिमिच्छे मनुष्ये यदि भवेल्लोके ॥

हस्तिनागो आह ॥

अहमनुचरोपेतो संग्रामे अपराजितो ।
हस्तिनागो बली तत्र मम भद्रे पतिं वरेत् ॥

व्याघ्री आह ॥

सिंहस्मिं नदमानस्मिं तुवं भीतो पलायसि ।
छर्दगूथमेव सृजं नेच्छेयं तादृशं पतिं ॥

सिंहो आह ॥

अनुपूर्वसुजातस्कन्धो
सिंहो पर्वतगोचरो हमस्मि ।
मृगसंघा त्रसन्ति सर्वे
त्वं भद्रे मम भर्तारं वरेहि ॥

1. B drishtvâddhaditâ abhû° C drishtvâvadhyadita abhûshi | ishtiye parâyitâ nâsti° B °striye parâjitâ nâsti°. — 2. B nâsti striya râ° C nâsti striye râ° BC °na ca mâm̃ ali°. — 3. C °vyâghrim̃ pa° B °ghrî pratim iccheya so mam̃ râ° C °shyasi | . — 4. C °ryâni kriyanti | B °kriyanti risha°. — 5. B rishabhâ a° BC °vacati tatra° B °patim̃ caret || C °patim̃ careta | .

7. BC °tam̃ sandatilân(C °lâm̃)tam̃ çakatehi lam̃galehi ca no tâ°. — 8. BC °patir na icche° C °cchema manu° BC °nushyam̃ yadi° B °l loko ha°. — 10. B °m anyacarope° C °m anyacaro yato sam̃ ° râyito ha° B °jito ha°.

11. BC °nâgo baddhi || tatra° BC °patim̃ caret || . — 13. BC °yasi ccha°. — 14. B cchadamûrttam eva srijam̃ naccheva tâdri ° im̃ || C chandamûrttem evam̃ saja nechevam̃ tâdri°.

16. C °pûrvam̃ sujâtakaska° B °jâtavaska° C °gocare aha° BC °m asmim̃ mri°. — 18. C °trasam̃ti sa° BC °dre bharttâ mama va(B °ca)rehi || .

व्याघ्री आह ॥

सर्वाकारवरोपेतं गिरिं वा स्वयमागतं ।
एतादृशं पतिमिच्छे मूर्ध्नेनापि प्रतीच्छितं ॥

स्यात्खलु पुनर्भिक्षवो युष्माकमेवं स्यादन्यः स तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं सो भिक्षवो तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन ऋषभो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः सुन्दरनन्दो तेन कालेन तेन समयेन ऋषभो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन हस्तिनागो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो देवदत्तो तेन कालेन तेन समयेन हस्तिनागो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्या सा तेन कालेन तेन समयेन व्याघ्री अभूषि । एषा सा यशोधरा ॥ तदा[122a]पि एषा एतेहि प्रार्थयन्ती न इच्छति मम एवाभिकांक्षति । एतरहिं पि एषा एतेहि प्रार्थियन्ती न इच्छति मम एवाभिकांक्षति ॥

इति श्रीयशोधराये व्याघ्रीभूताये जातकं समाप्तं ॥

बोधिसत्वस्य उद्याने कन्यानां रत्ना विश्राणयन्तस्य यशोधरा सर्वपश्चा आगता सर्वेहि अलंकारेहि विश्राणियन्तेहि ॥ [राज्ञा शुद्धोदनेन अमात्या आणत्ता । कतमत्र कन्याये कुमारस्य चक्षु निपतन्ति ॥] कुमारस्य यशोधरां दृष्ट्वा ताये चक्षु निपतितं । यो कुमारस्य हारो आबद्धको महार्हो शतसहस्रमूल्यो सो हारो कुमारेण ओमुञ्चिय यशोधराये दिन्नो ॥ सार्धप्रहसन्ती आह ॥ इयमहं एत्तकं

2. C °girim̃ vâ sva°. — 3. BC °mûrddhnenâpi praticchitâ ‖. — 4. C °m evam asyâd a° samaye sim̃ho°. — 5¹ BC °shi nai°. — 5². C °hetor aham̃° B °toḥ aham̃°. — 5³. C °ham̃ sa bhi°.

6. B anyâ sâkâ tena ° bhûshi na°. — 7². C °hetor esha° B °toḥ e°. — 8. B °bhûshi na kha°. — 9². BC °hetor esha°. — 10¹. C °kshavaḥ de°. — 10². C °kshavo evam asyâd anyo sâ te° B °d anyaḥ sâ te°.

12¹. BC °dharâ tadâ°. — 12². BC °eshâ na prârthayanti(C °nti) na i° C °kshanti |. — 15. C çrîmahâvastuavadâne yaço°.

16. C °ne kam̃nyânâm̃ ratnâ viçrâṇantasya° B °sarve paççâ° BC °lam̃kâlehi C °viçrâmantehi BC °ntehi râ°. — 17¹. C râjño çu° B °danona amâtya â° C °mâtyâṇattâ | B °ttâ ka°. — 17². B °tra kam̃nyâye° C °cakshuṇi patanti | B °tanti ku°. — 18. B °shṭvâ cakshu nipatati tâyâ cakshu ni° C °shṭvâ cakshuṇi patitâyâ cakshu° BC °titâ yo ku°. — 19. BC °ddhakâ mahâ° B °mûlyam̃ so hâ° B °dinno sâ°. — 20¹. BC sârddham̃ prasahanti°. — 20². B imam aham̃° C imam̃ aham ekatvam̃ âṇaham iti ‖ B °kam̃ âṇabam iti ‖.

अरहामीति ॥ कुमारेण प्रहसन्तेन शतसहस्रमूल्या अंगुलिका अंगुलीतो ओमुंचियान दिन्ना ॥ एवं कुमारो रतनानि कन्यानां विश्राणेत्वा राजकुलं प्रविष्टो ॥ राजा अमात्यान्पृच्छति ॥ कतमायां कन्यायां कुमारस्य चक्षु निपतितं ॥ अमात्या आहन्सुः ॥ सा महाराज महानामस्य शाक्यस्य यशोधरा नाम धीता । तत्र कुमारस्य चक्षु निपतितं ॥ राज्ञा महानामस्य प्रेषितं । यशोधरां धीतां मम पुत्रस्य देहि सर्वार्थसिद्धस्य कुमारस्य ॥ महानामो संदिशति राज्ञो शुद्धोदनस्य ॥ न शक्यामि यशोधरां कुमारस्य दातुं । यत्कारणं कुमारो अन्तःपुरे संवृद्धो न कहिंचिदागतो शिल्पे वा इष्वस्त्रे वा हस्तिस्मिं वा धनुत्सरुस्मिं वा राजशास्त्रेषु वा न कहिंचित्कुमारो गतिंगतः ॥ राज्ञो शुद्धोदनस्य श्रुत्वा दौर्मनस्यं जातं । एवमेतं यथा महानामो जल्पति । न मया कुमारो कहिंचि शिल्पे शेषितो अतिप्रेम्णेन ॥ सो दानिं राजा दुर्मना गृहं प्रविष्टो । कुमारेण दृष्टो पिता ॥ कुमारो पितरं पृच्छति । किं तातो दुर्मना ॥ राजा आह । भवतु पुत्र किं तवैतेन ॥ कुमारो आह ॥ न हि तात अवश्यं आचिक्षितव्यं ॥ राज्ञा कुमारं गुरुकं प्रेक्ष्य तेन भूयो भूयः पृच्छमानेन आचिक्षितं ॥ एवं चैवं च महानामेन शाक्येन आचिक्षितो तव अर्थेन यशोधरां याचयमानेन । तव पुत्रो अन्तेपुरसंवृद्धो न कहिंचि शेषितो शिल्पे वा इष्वस्त्रज्ञाने वा हस्तिस्मिं वा रथस्मिं $[122^b]$ वा धनुस्मिं वा । नाहं तस्य धीतां द्वेहं ॥ कुमारो पि श्रुत्वा पितरमाह ॥ मा तातो उत्कण्ठतु । नगरजनपदे घोषणां कारापेहि कुमारो सप्तमं दिवसं दर्शनं दास्यतीति । यो तत्र

1. B °prasahantena° C °mûlyâ am̃gulîkâ allinye omu°. — 2. BC °nâni kam̃nyâ° C °viçrâmaṇetvâ râjakuram̃ pra° B °shṭo râjâ°. — 3[1]. B °amâtya nirgacchati ‖ C °amâtyâ nirgacchati | . — 3[2]. C katamâyam̃ kanyâ°. — 3[3]. BC amâtya âha° C °hatsuḥ | . — 4. BC sa mahâ° BC °dhitâ tatra°. — 5[1]. B °nipatantitam̃ | . — 5[2]. C râjño ma° BC °shitâ yaço°.

6. B °râjñâ çu° C °râjño suddho° BC °nasya na ça°. — 7[1]. BC °çakyâni ya°. — 7[2]. C °ṇam̃ kuro a° BC °ḥpuram̃ samṛiddho° B °gato silpe° B °dhanuorusmim̃° C °dhanupi orusmim̃° B °t kumârasya gatim̃gataḥ râ° C °ro gatim̃gato | . — 9[1]. C râjâ çu° B °rmanasya jâtam̃ evam̃ e° C °jâtam̃ yathâ°. — 10. C °kahim̃vi çilpam̃ çishito° B °çilpam̃ çeshito | atipremnenâ so dâ°.

11[2]. C °dṛishṭvo pitâ ku° BC °pitâ kumâ°. — 11[3]. B °ram̃ pṛipṛicchati | . — 12[3]. C bhagavanta kutra kim̃ tavetena ‖ B bhavanta putra°. — 13[1]. B °çyam̃ âcakshi°. — 13[2]. BC râjño kumâra(C °re)smim̃ guruko pre(B °pra)shya tena°. — 14. B °âcikshipto | tava° B °yâciyamânena tava°. — 15. C °antaḥpure samṛiddho° B °pura samṛiddho° C °dhanushesmim̃ vâ° B °nusmim̃ vâ nâham̃°.

16. BC °dhitâ da°. — 17[2]. B °utkaṇṭhâtu | . — 17[3]. BC °ghoshaṇâ kâ° C °divase da.° dâsyâmîti yo°. — 18. B °kshito | so â° C °strajñâne vâ yu° B °balâhu(?)kke vâ ha° C °balâhu(?)kke vâ ha° B °dhanusmim̃ vâ dupavittarkeshu vâ | C °pavitarke vâ | A °pacittakeshu vâ | .

शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने युद्धे वा नियुद्धे वा छेदे वा भेदे वा जवे वा बलाकुक्षे वा हस्तिस्मिं वा अश्वस्मिं वा रथस्मिं वा धनुस्मिं वा थरुस्मिं वा उपवितर्केषु वा ॥ राजा शुद्धोदनो श्रुत्वा प्रीतो संवृत्तो ॥ तेन नगरे कपिलवस्तुस्मिं जनपदे घोषणा कारापिता यथा कुमारो सप्तमं दिवसं दर्शनं दास्यतीति । यो तत्र शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने । अन्येहि पि अधिष्ठानेहि दूता प्रेषिता । शुद्धोदनस्य सर्वार्थसिद्धो कुमारो सप्तमं दिवसं दर्शनं दास्यति । यो तत्र शिक्षितो सो आगच्छतु ॥

तहिं कपिलवस्तुतो जनकायो निर्धावति जनपदेष्वपि जनो आगच्छति । अन्येहि पि अधिष्ठानेहि कौतूहलजात: आगच्छति । शाक्यकुमाराणां विभवं पश्यिष्याम: बलपराक्रमं च कुमारस्य सर्वार्थसिद्धस्य पश्यिष्याम: ॥ तहिं अनेकायो जनसहस्रियो समागतायो कुमारा कपिलवस्तुतो निर्धावन्ति च ॥ अपरो पि भ्रान्तो हस्तिनागो बहिर्नगरातो कपिलवस्तुं प्रविशति षष्टिहायनो परमेण स्थामेन च समन्वागतो । देवदत्तो च कपिलवस्तुतो तं दर्शनस्थानं निर्धावति हस्तिस्कन्धवरगतो । तस्य सो हस्तिनाग: भ्रान्तो अभिमुखो आपतितो । तेन कुपितेन देवदत्तेन सो हस्तिनागो षष्टिहायनो तलप्रहाराय एकाहत्यं कृत्वा तत्रैव नगरद्वारे निहतो । सो तं हस्तिनागं हत्वा निर्धावितो तं द्वारं ॥ तत्र महाजनकायस्य संपिण्डा सुन्दरनन्दो च कुमारो अनुप्राप्तो ॥ सो पृच्छति भो भणे किस्येदं नगरद्वारे जनसंपिण्डा ॥ जनो आह ॥ देवदत्तेन निर्धावन्तेन एषो हस्तिनागो एकाये त-

3[2]. C °kapilasmiṁ ja° B °ghoshanâ kârâpitâ yehi ku° C °pitâ | ye ku°. — 5. BC °cchatu | yadi çi° C °çilpajñâne yadi çilpajñâne yadi i°.

6[1]. C anyehiṁ pi adhisthânehi dû° B °shṭhâne dûtâ preshitâ çu°. — 6[2]. C °nasya putro sarvâ ° syatîti | . — 7. C °chatu yo vâ darçanakâmo âgachatu | . — 8[1]. BC *intercalent le passage suivant :* tahiṁ anekajanasâhasriyo sannipatitâyo(B °tâ | yo) kapilavastusmiṁ luṁbiniye ca tatra kumâro darçanaṁ dâsyati | ete daça kroçâṁ tatra sapta tâlâḥ sapta tâlâ kroçântareṇa nikhata (C °nisharṇṇâ) saptanâṁ tâ(C °stâ)lânâṁ purato bheri occhritâ (C °bheriṁ oḍḍitâḥ) (*cf.* p. suiv. l. 20) BC °vastuno janakâ° C °pade câpi jano°. — 8[2]. BC anyehi pi ashṭânehi kautûhalena jâ° C °jâtâ âga°. — 9. BC °vibhayaṁ paçyi(C °çi)shyâmaḥ bala-(B °ḥ | vara)parâ ° siddhasya parâkramaṁ paçyi°. — 10. C °nekayojanasaha° B °hasrâyo sa° C °gato kumâ° BC °vastuno ni° B °rddhâvati ca | .

11. C °nto ca hastinâgo varhir na° B °lavastu praviçati | sha° BC °shashṭhihâgato para° C °paramena ca sama° B °nvâgato de°. — 13. BC °vastuno taṁ da ° rddhâvati | ha° C °ndhavarato B °gato tasya°. — 14[1]. C tasya ca so hastinâgo bhrâ° BC °âpattito | . — 14[2]. C °prahârâye ekâhasto kṛi° B °ekâhatyo kṛi° C °tatreva na° BC °dvârehi hato so taṁ°.

16[1]. BC °dvâraṁ tatra°. — 16[2]. C °saṁpiṇḍo(?) su ° prâpto pṛi° B °prâpto so pṛi°. — 17. BC °cchati ho bhaṇe ki(B kiṁ)syedaṁ° C °piṇḍâya janâ â° B °ṇḍâ ja°. — 18[1]. C janâ âha | . — 18[2]. C °hârâye mahatâ te° B °hato tena°.

लप्रहाराये हतो । तेन हस्तिनागेन एवं नगर[123ª]द्वारमोरुद्धं न च तं देवदत्तो शक्नोति अतः नगरद्वारतो अपकर्षयितुं लंघयित्वा अतिक्रान्तो ॥ सो दानि हस्तिनागो सुन्दरनन्देन यानातो अवतरित्वा ततो द्वारतो सप्त पदां कड्ढितो । दृष्ट्वा महाजनकायेन हक्कारो मुक्तो । अहो कुमारस्य सुन्दरनन्दस्य उत्साहो ॥ सुन्दरनन्दो पि तं हस्तिनागं द्वारतो सप्त पदानि अपकर्षित्वा अतिक्रान्तो ॥ बोधिसत्वो महता समृद्धीये अनुप्राप्तः ॥ बोधिसत्वो पृच्छति । किस्य एष नगरद्वारे महां जनकायसमागमो ॥ ते आहन्सुः ॥ कुमार देवदत्तो च कपिलवस्तुतो निर्धावति भ्रान्तो च हस्तिनागो प्रविशति नगरद्वारं अभिमुखो देवदत्तस्य आपतितो । तेन रुषितेन सो हस्तिनागो एकाय तलप्रहाराये निहतो सो एषो हस्तिनागो नगरद्वारं ओरुन्धित्वा पतितो च । देवदत्तो न शक्नोति अतः नगरद्वारातो अपकर्षितुं लंघित्वा अतिक्रान्तो । सुन्दरनन्देन सप्त पदानि कड्ढितो । तदेष जनकायो संपिण्डाये कथं पि निर्धावति ॥ तेन कालेन तेन समयेन कपिलवस्तु सप्तहि प्राकारेहि परिक्षिप्तो अभूषि । बोधिसत्वेन यानातो अवतरित्वा मातापितृकेन बलेन तं हस्तिनागं अतो नगरातो तेषां सप्तानां प्राकाराणां परतरेण क्षिप्तो ॥ तं बोधिसत्वस्य उत्साहं दृष्ट्वा अनेकेहि देवमनुष्यसहस्रेहि हक्कारा मुक्ताः बोधिसत्वो पि निर्धावितो ॥ राजापि शुद्धोदनो शाक्यमण्डलपरिवृतो महानामो पि शाक्यो निर्धावितो ॥

तहिं कुमारेण सर्वार्थसिद्धेन दर्शनो दिन्नः सर्वशिल्पकर्मायतनानि कुमारेण संदर्शिता । सिद्धार्थकुमारस्य न कोचित्समसमो तथा युद्धे वा नियुद्धे वा न कोचित्कुमारस्य समसमो ॥ पश्चिमे निदर्शने बाणा विध्यन्ति ॥ एते दश क्रोशा तत्र सप्त तालाः । सप्त ताला क्रोशान्तरेण निखता सप्तानां तालानां पुरतो भेरी ओ-

1. B °çaknoti ataḥ° C °tvâ atyabhikrânto | . — 2. C °ritvâ tataḥ dvârâto sa° dâm̃ kaṭṭito B °dâm̃ kaṭito dṛi°. — 4¹. BC °janakâye hakkâ° B °mukkâro aho° C °muktaḥ aho°. — 4². BC °tsâho sunda°. — 5¹. C °sapta yadâni° B °dâni ayam̃karshi° C °tvâ atyabhikrânto | . — 5². C °samṛiddhiye anuprâpto || .

6². B kim̃sya e° C °janakâyo samâ°. — 7¹. C °âhatsuḥ || . — 7². C kumâro deva° BC °vastuno nirddhâ° B °nâgo ca pravi° BC °dvâre abhi° B °sya âyatito tena°. — 9. BC °shitena tam̃ hastinâgam ekâ° C °stinâgo nâga° C °orum̃dhitvâ° BC °tito ca de°. — 10. BC °çaknoti | ataḥ° C °lam̃gayitvâ atyabhikrânto | B °krânto sunda°.

11¹. B °nandattena sapta° C °nandas tena sapta° BC °ni kaṭṭito tad e°. — 11². C °sha janapadâni janakâ° B °kâyo sapiṇḍâ° BC °katham̃ vi ni°. — 13. C °yânâto atari° C °paratalena kshipto || . — 15. C bodhi° râ muktaḥ bo° BC °vito râjâ°.

16. B °rivṛitâ mahâ°. — 18. C °dinno | sarva° B °rçitâ si°. — 19. BC °sya na kvacit sa° C °niyuddhe° BC °ddhe vâ na kvacit ku° samo pa°. — 20¹. C pachime nidarçanam̃ vâṇâ° BC °dhyanti | tatra° (p. suiv. l. 1).

पृच्छति ॥ एतस्य यज्ञस्य किं फलं किं गुणनिर्वृत्ति । केदृशमेतेन यज्ञगुणं निर्वर्तयिष्यति इमं एत्तकं प्राणवधं कृत्वा ॥ राजा आह ॥ एते यत्तका प्राणजाती अत्र यज्ञे हनिष्यन्ति सर्वे स्वर्गं गमिष्यन्ति । अहं च यत्तका एते प्राणा एत्थ य[130ᵇ]ज्ञे हनिष्यन्ति तत्तकां वारां स्वर्गे उपपद्यामि ॥ कुमारो आह ॥ महाराज न एवं एतं मिथ्यादृष्टि एषा अहिंसा परमं धर्मं ॥ प्राणातिपातो अधर्मो प्राणातिपातवेरमणो धर्मो । अदिन्नादानो अधर्मो अदत्तादानवेरमणो धर्मो । कामेषु मिथ्याचारो अधर्मो कामेषु मिथ्याचारवैरमणो धर्मो । सुरामैरेयमद्यपानं अधर्मो सुरामैरेयमद्यपानातो वैरमणो धर्मो । मृषावादो अधर्मो मृषावादातो वैरमणो धर्मो । पिशुनवाचा अधर्मो पिशुनवाचातो वैरमणो धर्मो । संभिन्नप्रलापो अधर्मो संभिन्नप्रलापातो वैरमणो धर्मो । अविद्या अधर्मो अविद्यातो वैरमणो धर्मो । व्यापादो अधर्मो व्यापादातो वैरमणो धर्मो । मिथ्यादृष्टि अधर्मो सम्यग्दृष्टि धर्मो ॥ दश कुशला कर्मपथा धर्मो ॥ दशहि महाराज अकुशलेहि कर्मपथेहि समन्वागताः सत्वा नरकेषूपपद्यन्ति ।॰ दशहि कुशलेहि कर्मपथेहि समन्वागताः सत्वा स्वर्गेषूपपद्यन्ति ॥ तदेवं महाराजेन न एष स्वर्गाणां पथो गृहीतो नरकेषु गमनाय एष पथो गृहीतो ॥ एवं सुधनुस्य कुमारस्य धर्मदेशनां श्रुत्वा राजा सुचन्द्रिमो ते च सर्वे राजानो सर्वो महाजनकायो प्रीतो । तेन राज्ञा सुचन्द्रिमेण सुधनुस्य कुमारस्य धर्मदेशनां श्रुत्वा ते सर्वे प्राणकजातीयो जलचरा च स्थलचरा च ओसृष्टा ॥

1¹. B ettasya ya ° guṇaṁ nivṛitti ‖ C °guṇaṁ kiṁ nivṛittiṁ | . — 1². C kena sadṛiçena tena ya° B kedṛiçenam ete° BC °ṇaṁ nivarttayishyati | i°. — 2². B °jâti atra° C °hanishya sarve° BC °rve sarga ga° C °mishyati | . — 3. B ahaṁ ca ettakâ° C ahaṁ ca ete ettakâ prâ° BC °ṇâ etthaṁ yajñe hanishyanti(C °shyati) | tatta° B °ttakâ vârâṁ sva°. — 4². B °râjâ na° C °shṭi emâ ahiṁ°. — 5. B °ṇo dharmo a°.

6¹. BC adinnadâno° C °ṇo dharmaḥ | B °rmo kâ°. — 6². BC kâmeshu mithyâ(C °thyâcâ)ro adharmo(C °rmaḥ | ) vyâpâdâto | (C °to) vaira° C °dharmaḥ | mithyâdṛishṭi adharmo | mithyâdṛishṭivairamaṇo dharmaḥ | B °dharmo mithyadṛishṭi adharmo surâmaireyamadyapânâto vai°. — 7. C °adharmaḥ su° C °dharmaḥ | . — 8. C °adharmaḥ mṛi° C °dharmaḥ | . — 9¹. C °adharmaḥ pi° C °dharmaḥ | . — 9². C °adharmaḥ saṁ° BC °ramaṇo dha° C °dharmaḥ | . — 10. C °adharmaḥ a° BC °ramaṇo dha° C °dharmaḥ.

11¹. C °adharma vyâ° B °ṇo armo | C °dharmaḥ | . — 11². BC °adharmo(C °rmaḥ) saṁmyagdarshṭi dha° C °dharmaḥ | . — 12¹. BC daçâ ku° C °pathâ adharmaḥ daça kuçalâ karmapathâ dharmaḥ | B °dharmâ ‖ . — 12². B °tâḥ satvâṁ na°. — 13. B °pathe sa°. — 14. BC tad etaṁ ma° C °jena naisha svargâṇâṁ patha gṛi° patha gṛi° B °ṇâṁ pathâ gṛihî ° hito nalakeshu gamanâya esha patho gṛihîto ‖ . — 15. B °sudhanasya ku° nâṁ çrutvâ te sarve prâṇaka° C °no sarve mahâja°.

16. BC te ca râ° C °sudhanasya °B °sthalacarâ ca dharmaṁ o° C °sthalacarâ ca dharmo o°.

मनोहरा किन्नरी सुधनुस्य कुमारस्य अल्लीना । सर्वं च किन्नरभवनं मनसि न वर्तति सुधनुस्य प्रेमेन ॥ सुधनुस्यापि अन्या क्रीडारतीयो मनसि न वर्तन्ति मनोहराये प्रेमेन ॥ राज्ञापि सुचन्द्रिमेण यथा सुधनुना कुमारेण संदिष्टं तथा निर्गडं यज्ञं अनवद्यं ॥ अनेकानि श्रमणब्राह्मणकृपणवणीपकसहस्राणि अन्नपानेन सन्तर्पिताः आच्छादनेहि आच्छादिताः ॥ वृत्ते यज्ञे सुधनुकुमारो मनोहराये सार्धं हस्तिस्कन्धवरगतो महता परिवारेण महता समृद्धीये महता समुदयेन महता विभूषाये सिंहपुरातो हस्तिनापुरं गतो ॥

कुमारस्य हस्तिनापुरं प्रविशन्तस्य नगरं [131ª] हस्तिनापुरं अलंकृतं विततवितानं चित्रदुष्यपरिक्षिप्तं ओसक्तपट्टदामकलापं सिक्तसंमृष्टं धूपितधूपनं मुक्तपुष्पावकीर्णं देशेदेशेषु नटनर्तकऋल्लमल्लपाणिस्वर्याकुम्भथूनिका ॥ एवं सुधनुकुमारो महता समृद्धीये महता समुदयेन मनोहराये सार्धं हस्तिस्कन्धवरगतो हस्तिनापुरं प्रविष्टो ॥ तेन कुमारेण सर्वा राजकन्या ओसृष्टा मनोहराये सार्धं क्रीडते व ॥ राज्ञो सुबाहुस्य षष्टीहि नगरसहस्रेहि कार्यसहस्राणि परिहायन्ति अनेकसहस्राणि निवर्तन्ति ॥ नैगमजानपदेहि राजा सुबाहु विज्ञप्तो । महाराज सुधनुकुमारो मनोहराये किन्नरीये प्रमत्तो अर्थार्थानि न समनुशासति राजकार्याणि परिहायन्ति षष्टीहि नगरसहस्रेहि अनेकसहस्राणि निवर्तन्ति ॥ राज्ञा सुबाहुना सुधनुकुमारो शब्दापितो ॥ पुत्र जानपदा ओरवन्ति । अर्थार्थानि न समनुशाससि यथापूर्वं मनोहराये किन्नरीये प्रमत्तो विहरसि विसर्जेहि पुत्र एतां किन्नरीं अनु-

1¹. C °râ kimnarî° BC °sudhanasya ku°. — 1². C °manasi varttati° B °vartlati | su° BC °dhanasya pre°. — 2. BC sudhanasyâ° C °krîḍyâramaṇîratiyo manasi varttanti° B °varttanti | mano°mena râjñâ°. — 3. C °drimena ya° BC °saṁdrishtaṁ | ta° C °thâ nigaḍaṁ°. — 4. B °brâhmakṛipaṇavaniyakasa° C °châditâ vṛi° B °ditaḥ vṛi°. — 5. BC °sudhano ku° C °ndhavalagato° BC °mṛiddhî(C °ddhi)ye mahatâ parivâreṇa mahâtâ samu° B °dayena mahâtâ vibhû° C °bhûshâyena siṁdapurâ ° raṁ gataḥ | .

8. B °sya hastipuraṁ pra° C °nagaraṁ hastinâpuram alaṁ° BC °oçaktapaṭṭâdâma° C °lâpasiktasaṁsṛishṭâ dhûpi ° lâpaṁ çiktam utsṛijya dhûpi° C °shu natanartta° B °tanarttavâ ṛi° BC °mbhatûṇi° B °ṇikâ evaṁ°. — 10. C °dhana kumâ ° rddhaṁ hastikandhavalagato° B °rddhaṁ hastikandham avagato ° pravishṭho | .

12. B °sarva râja° C °sarvâṁ râjakâṁ osṛi° C °sârddha krî° BC °ḍate na râjño°. — 13. B °shashṭihi° C °srehi kâyaṁ saha° BC °yanti(C °nti | ) anye ca sahasrâṇi varttanti | L °yanti anena ca sahasrâṇi nivarttanti | . — 14¹. C anekamanujânapadanegamânegamajânapidehi | râjâ° B °hu vipto mahâ°. — 14². B °hârâjâ su° C °rîye pravṛitto | athâithana sama° B °arthâthâni na sama° BC °hâyanti | sha° B °shashṭihi na° C °nagasahasre° B °aneyasahasrâ niva° C °anekajanasahasrâ niva°.

16. C °dhanakumâ° BC °pito pu°. — 17¹. BC putro jâ°. — 17². B arthâthâni° C C athârthâni° B °çâsati | ya° BC °tto viharesi visa° C °sajjehi | putra etâṁ kinnarim anujâ° BC °nâhi taṁ ga°.

जानाहि तां गमनाये ॥ सो कुमारो मनोहराये तृष्णाजालेन बद्धको न तामनुजानाति । पितरे पुनःपुनरुच्चति । पुत्र विसर्जैहि एतां किन्नरीं अन्यानि ते राजकन्यानि यत्तकानि जल्पसि तत्तकानि आनयिष्यामि ॥ सो कुमारो पुनर्पुनः तेन पितुना उच्यन्तो न विसर्जयति ॥ अमात्या च पुनःपुनः राज्ञो सुबाहुस्य निवेदेन्ति ॥ महाराज सुधनुकुमारो मनोहराये किन्नरीये प्रमत्तो राजकार्याणि न करोति बहूनि राजकार्याणि परिहायन्ति ॥ राज्ञा च अमात्या आणत्ता उपरुन्धथ कुमारं ॥ सो अमात्येहि राजाणत्तीये उपरुद्धो ॥ उपरुद्धेन कुमारेण गृहं निःश्रेयं संवृत्तं सर्वा लक्ष्मी अन्तरहिता । मनोहरा स्वयं सुबाहुना अनुज्ञाता निरतिं किन्नरनगरं गमनाय । मनोहरे गच्छ अनुज्ञातासि येन सुखानि शीतलानि वनानि मातापितॄणां सकाशं ॥

सा दानि सर्वालंकारविभूषिता ततः प्रासादतो ओतरिता । ताये ओतरन्तीये बहूनि स्त्रीसहस्राणि सुधनुस्य रोदन्ति मनोहराये शोकेन । हस्तिनापुरे जनपदस्य अन्तरं नास्ति वामदक्षिणेन हस्तेन मनोहराये हस्तिनापुरातो निष्क्र[131b]-मन्तिये । वामदक्षिणातो अंजलिसहस्राणि प्रतीच्छमाना गन्धमाल्येन पूजियमाना स्त्रीसहस्रेहि बहुना च जनकायेन अनुगच्छियमाना सा दानि हस्तिनापुरातो निर्यात्वा जनकायस्य विसर्जनं कृत्वा उत्तरामुखं येन हिमवां पर्वतराजा तेन प्रणता उपगच्छति च उत्तरामुखं येन च हस्तिनापुरं तेन सुधनुं अवलोकेति ॥ तहिं च अनुहिमवन्ते शतद्रुनदीकूले दुवे लुब्धकपुत्रा मृगव्यां अण्वन्ति । एको लुब्धकपुत्रो

1. C °râye strijâlenabbarddhake | na te anujânati | B °lena varddhako na taṁ anujânâti pi°. — 2[1]. C °re pûnarpunar ucyati B °ccati putra°. — 2[2]. C °nnarim anyâ° B °lpasi | tatta°. — 3. C °rpunas tenâpi pi°. — 4. C °punarpunaḥ râ° BC °ḥ râjñâ su°. — 5. C °dhanakumâ °jakâryyâ pari° B °karonti bahuni râja° C °riharaṁti | râjâ°.

6. B râjño ca a° C râjâ ca a° B °rundha kumâraṁ ‖. — 7[1]. B °râjaṇattiye uruddho ‖ C °râjâ âṇattîye uparuṁdhathaḥ uparuṁdhena°. — 7[2]. C uparuṁdhena ku° haṁ niçreyaṁ saṁ° B °haṁ niçrayaṁ saṁ° C °sarvâṁ lakshmî°. — 8. C °harâ ayaṁ svayaṁ° C °nirati râma kinna° B °nirati kinnarenagaraṁ°. — 9. B °jñâtâṁsi ye° BC °lâni varâni mâ° B °pitṛinâṁ°.

11[1]. BC so dâni° C °bhûshitâḥ tato prâ° B °taḥ prasâ° BC °to ottaritvâ tâ(B °to)°. — 11[2]. B toshe ota° C °otaranti | bahû° B °bahuni strî° ṇi | sudhanasya ro° C °dhanasyântaḥpurasya ro° B °râye | sokena hasti°. — 12. B °nishkrasantiye vâ° C °manti |. — 14. C yena vâma° BC °aṁjaliṁ saha° B °ndhamûlena pû° BC °pûjayamâ° mânâ | sâ dâni° C °janakâyesya vi° tvâ uttaramukhena hima° puran tena sudhanaṁ kumâraṁ avalokenti | B °dhanaṁ avalokenti tahiṁ°.

17. C °nte satadru° B °nte sadrûpe kule duve° C °putro mṛi° B °yâṁ avati | C °aṇvati |. — 18. C °lako noma dvi° B °mâṇavako°.

उत्पलको नाम द्वितीयो लुब्धकपुत्रो मालको नाम ॥ तेहि दृष्टा मनोहरा किन्नरी दूरतो आगच्छन्ती सर्वालंकारविभूषिता अचुद्रानुलेपना अमिलानगन्धमाल्या पुनर्पुन: पृष्ठतोमुखी अवलोकयन्ती आगच्छन्ती ॥ तेहि सा किन्नरी प्रत्यभिज्ञाता ॥ ते कृतांजलिपुटा प्रनिपतिता पृच्छन्ति ।

गच्छन्ति अवलोकेसि अवलोकेन्ति गच्छसि ।
किं भद्रे अवलोकेसि कहिं वा त्वं गमिष्यसि ॥

मनोहरा आह ॥

उभयं अभिप्रार्थेमि .... किंपुरुषनगरं ।
सुधनुं चावलोकेमि निरतिं चाभिप्रार्थये ॥

ते दानि लुब्धकपुत्रा आहंसु: ॥

सुधनुस्य कुमारस्य कुरुपंचालेषु नारियो ।
ताहि सार्धं रममाणो न सो तुभ्यं स्मरिष्यति ॥

मनोहरा आह ॥

आनयिष्याम्यहं सुधनुं प्रेक्षितेन स्मितेन च ।
कोचिद्वृद्धो व मातंगो वशे एषो भविष्यति ॥

ताये तेषां लुब्धकपुत्राणां हस्ते शतसहस्रमूल्या च अंगुलिका दिन्ना तालीसमाला च । यदि मम पृष्ठतो सुधनुकुमारो आगच्छेय मम मार्गमाणो इमं अभिज्ञानं दास्यथ मम वचना अभिवादनं पृच्छेयाथ । वक्तव्यो । इतो एवं निवर्ताहि दुर्गमो

1. BC °dṛishṭvâ ma° B °ccbanti sarvâlam̃kàrabhûshitâ | adrânule° C °shitâḥ a° B °amilànugam̃dhâmâlyâ° C °punaḥ punaḥ pṛi ° khi acalokayanto âga°. — 3. C °jñâtaḥ B °jñâtâ te kṛi°. — 4. B °jalim̃pûtâ prani° C °praṇipatità pṛichanti ava° B °nti ga°. — 5. C avalokenti avaloke gachanti kim̃° B gacchanti avaloke avalokenti gacchati | .

8. C ubhayem abbiprâ° BC °rthemi(C °si) kim̃purusha°. — 9. BC sudhanam̃ câva° C °lokesi niratim̃ nâma nagara câbhiprârthayet | B °niratim̃ cabhiprârthayet ‖ . — 10. C °putra âhatsuḥ | .

11. B sudhanasya kumârapam̃câ° C sudhanasya kurûpam̃câreshu nâtiyo°. — 12. B so tâhi° C so tâni sârham̃ ramamâṇo tum̃hyam̃ smarashyanti | B °smaranti ‖ . — 14. C °shyâm aham̃ sudhanam̃ preshitenâsmim̃ tena ca kam̃cid vṛi° B °sudhanu prekshitena smim̃tena ca kam̃°. — 15. B kam̃cid voca mâtàm̃gâ vaçam esho bha° C °ddho ca mâtam̃go vasam esho bha°.

16. C °mûlyâṅgulikâ di° BC °dinnâḥ tâli° C °samârâ ca | . — 17. BC °sudhanakumàro° C °rgamâroBhasya imam̃° BC °jñâtam̃ dà° B °dàsya mama va° C °pṛicheyatha. — 18[1]. C uktayo ito°. — 18[2]. B °evam̃ vivarttâ° C °evam̃ vivattehi durgame paratehi tena manu° B °paratena manu°.

परतरेण मनुष्याणां । नियतो मे मनुष्याणां विनाभावः ॥ एवं लुब्धकपुत्राणां संदिशित्वा मनोहरा अस्पृशन्ती पादतलेहि उदकं शतद्रुनदीं तीर्णा ॥

राज्ञा सुबाहुना यं कालं जानाति गता मनोहरा इति ततो सुधनुकुमारो आनापितो उत्संगे उपविसापितो पितरे पि मातरे पि ॥ मा पुत्र किन्नरीमनुस्मराहि विस्तीर्णो ते अन्तःपुरो बहूनि कन्यासहस्राणि अपराणि ते आनापेष्यं । ताहि सार्धं क्रीडाहि रमाहि परिचारेहि किन्ते किन्नरीये त्वं मानुषो ॥ राजा कुमारं चाश्वासयति अमात्या च आणत्ता । कुमारस्य गृहं अलंकारापेथ ॥ [132a] अन्तःपुरस्य संदिष्टं । सुष्टु कुमारं अभिरमापेथ यथा कुमारो मनोहरां न समनुस्मरेय ॥ राज्ञो वचनमात्रेण कुमारस्य गृहं यथा दिव्यं विमानं तथा अलंकृतं सर्वसंज्ञितं ॥ सप्तसु द्वारशालासु सुचूर्णघटानि स्थापितानि अक्षतानि स्थापितानि यानि अन्यान्यपि लोकस्य मंगलसंमतानि सर्वाणि स्थापितानि ॥ ब्राह्मणसहस्त्रियो कुमारस्य द्वारे उपस्थापितानि तथान्यो पि जनकायो कुमारं प्रतिपालयन्तो ॥ कुमारो पि पितरा समाश्वासित्वा विसर्जितो । गच्छ गृहं उपसेवेहि स्त्राहि विलिम्पाहि आसक्तमाल्यभरणो क्रीडाहि रमाहि प्रविचारेहि राजकार्याणि च समनुशासेहि ॥ एवं संदिशित्वा पितरे कुमारो सुधनु विसर्जितः ॥

सो दानि राजकुलातो निर्यात्वा सार्धं वसन्तकेन एकिना परिचारकेन भावानुरक्तेन हस्तिनापुरातो नगरातो निर्यात्वा येन हिमवन्तपर्वतराजा तेन प्रक्रान्तो मनोहराये अर्थाये ॥ कुमारस्य तानि पैतृकानि षष्टिनगरसहस्राणि स्फीतानि

1[1]. C niyavo ma tena manu ° bhàvo | B °to me mayàvinàbhàvaḥ evam̃°. — 1[2]. B °trà-nàm̃ sam̃° BC °drunaditìrṇṇàm̃ ràjñà°. — 3. B °hunàm̃ yam̃ kà ° rà iti ‖ tato° C °tataḥ su° B °ànàyito utsaṅge u° BC °tare pi mâ pu°. — 4. C °nnare pi anusmare pi ḥi vistìrṇṇo antaḥpure bahû° B °antapuro° BC °hùni kam̃nyà° C °râmi te aṇâpe° B °ràṇi te amàpe°. — 5. BC tehi sà° C °sàrddha kri° B °parivârehi kinnariye ‖ tvam̃° BC °mânu-shî râ°.

6. BC ràja kumâram̃ và(C °cà)svàsati a ° ṇattà ku°. — 7. B °lam̃kâràye antaḥ° C °lam̃kâpethà. — 8[1]. C °ḥpurasyàpi sam̃° BC °sam̃dṛishṭam̃ su°. — 8[2]. BC °petha | yathâ°. — 9. C °divyavimâ ° kṛitam̃ | antaḥpurikàpihi âtmanam̃ alam̃kṛitam̃ sarvasam̃ginam̃ B °jñinam̃ sapta°. — 10. B °dvàlaçàlà° C °çâlâsu sauvarṇṇaghaṭâni sthâpitâni yàni akhàtàni sthâpitàni anyàni lo° B °yâni anyàn api lo° C °kasya maṅgalasamatàni sarvà° B °galasa-matâni sarvâ ° tàni brâ°.

11. BC °pitàni ‖ tathâ° C °thànye pi janakâye ku ° tipârayanto B °nto ku°. — 13[1]. BC °ro pi pitaram̃ samâ° C °mâsvàsi visa° B °màsvàsitvà jisarjito ga°. — 13[2]. BC °ham̃ ‖ uvà-seve° C °ktamàlyàbharaṇo° C °ràjakàryàni ca sa° B °çasohi ‖ . — 15. B °sudhano visa° C °rjjito | .

16. C °parivârakena bhâ° C °himavàm̃ parva°. — 18. B °shashṭim̃ na° C °shashṭhî na ° stìrṇṇântaḥpu° B °stirṇṇam anta°.

सनिगमजनपदानि विस्तीर्णं च अन्तःपुरं मनसि न वर्तति । मनोहरामेव किन्नरीं शोचति समनुस्मरति ॥

राज्यं राजपरिदेववीक्षणकालेन तन्तदा सर्वं ।
अपविज्झियान प्रक्रमि अधौतमलिनं पटं गृह्य ॥
अनुरक्तभक्तिभावं चैकं परिचारकं ग्रहेत्वान ।
पर्वतराजाभिमुखो सो हिमवन्तमभिप्रसरेसि ॥
अचिरेण गतो सुधनू हिमवन्तं रम्यपर्वतनितम्बं ।
तत्राद्दशासि लुब्धकौ उप्पलकं मालकं चैव ॥
पश्यति च शतद्रुनदीं शुचिविमलस्फटिकविकाशां सततं ।
. . . . . . . . . . . . . . . . . . . . . . . . .
शुभा सुशीतलतोया प्रस्यन्दमाना मृदुतरुणसुजाता ।
सा शाद्वला प्रलुलिता वहन्ति अक्षौहिन्यो शतद्रू ॥
सुधनू उवाच कांचिल्लुब्धका श्यामां अक्षुद्रानुलेपनां ।
नारीं अमिलानगन्धमाल्यां विक्रमन्तिं अपश्यथ ॥
अवोच लुब्धकपुत्रा यादृशीं त्वं पृच्छसि सा इतो चिरं ।
उत्तीर्य नदीं गता सा इमेन कालेन हिमवन्तं ॥
प्रव्याहृतं हि ताये सुधनुर्नामेन पृष्ठतो मह्यं ।

1. C °m evaṁ ki° B °nnarî ço°. — 3. B râjavidevavikshaṇena kâle° C râjaṁ videvavicakshuṇena kâlena taṁ tadâ° BC °sarvaṁ apa°. — 4. B °krami | adhau° C aparijmi(?)yâna prakrâmi | adhautamaliṁnaṁ pa° B °dhautamalinaṁ pa° hya anu°. — 5. BC °bhâvaṁ ca ekaṁ pa° C °parivârakaṁ gṛihitvâna B °tvâna parva°.

6. BC °kho hima°. — 7. C °ṇa gaṁto âbharaṇâni nânâpra° (p. 106, 5; *je remplace ici* C *par* M) B °sudhanu hi° M °dhanakumâraṁ hi° rvataṁ nitambaṁ B °mbaṁ tatrâ°. — 8. BM °ddarçâsi lubdhako u° M °utpalakaṁ mârakaṁ caivaṁ° B °ppalako salakaṁ cai° BM °caiva(M °vaṁ) sudha° (B *et* M *placent ici la strophe des lignes* 13-14). — 9. BM °çaradruṁ nadiṁ(M °diṁ) çuci° kâçâṁ viprasannâ satataṁ || çubha°.

11. BM çubhasu° toyâ syanda° B °mânâṁ mṛidu° BM °sujâtâ sâdva(M °du)lâ pra°. — 12. BM sâdva(M°du)lâ pra° B °lito vaha° M °lita vahati akshiṇyo ça° B °vahati akshoṇyo çatadrû devoca° (l. 15) M °çatadru nadiṁ devoca° (l. 15). — 13. B sudhanu dve lubdhakeputrân uyâca kecillu° M sudhanakumâro dve lubdhakaputrân uvâca | kaṁcillu° BM °bdhaka syâmâ akshidrâ(B °adrâ)nulepano(M °nâ) nâri âmi°. — 14. BM nâri âmi° M °lânagaṁdhamâlyâ abhikrama° B °mâlyâ vi° BM °manti apaçyatha | paçya°. — 15. M °putro yâdṛiçi tvaṁ° B °cchasi | so ito cira çatatirṇṇo nadiṁ | gatâ° M °sâ yito cira çatâtirṇṇe nadiṁ°.

16. BM °mavaṁtaṁ pra°. — 17. M pratyâhṛi° B °taṁ | hi° M °dhano kumâro nâmena pṛishṭato° B °hyaṁ yadi°.

यदि एष्यति लुब्धकपुत्रा दास्याथ इमं अभिज्ञानं ॥
इममङ्गुलीयकं मम इमां च तालीसगन्धिकां मालां ।
दास्याथ लुब्धकपुत्रा भर्ता मम स्वामिकस्वा[132b]मि ॥
अभिवादनं च लुब्धका मम वचना स्वामिकं भणेयाथ ।
प्रतिगच्छ हस्तिनापुरं नियतो नियमो विनाभावो ॥
प्रत्यग्रहेसि मालां आलम्बेसि मुद्रिकां प्रमोदन्तो ।
अपि मरणं अभ्युपेमि मनोहराये व समागमं ॥
ते तं भणन्ति लुब्धका सुधनं इतो एव त्वं निवर्तेहि ।
हस्तिनापुरस्मिं नगरे का तुह्यमभुक्त वर्तेया ॥
तं तस्य नैव हृदये नापि च तेषां शृणोति सो वचनं ।
गन्तुं येवाध्यवसितो शतद्रुं च महानदीं तीर्णो ॥
लुब्धका पि ते व्यवस्थिता राजामर्षो भवेया अस्माकं ।
यदि सुधनुमेवंरूपे अत्ययस्मिं परित्यजेयामः ॥
अवतीर्णा ते पि नदिं व्याघ्रगणसिंहवारणसंघोषां ।
मृगविहंगमानुयातां मनोरमां च चक्रवाकरुतां ॥
तान्तत्क्षणेन तीर्णा महानदीं हन्ससारसाभिरुतां ।
व्याडेहि किन्नरेहि च प्रपातजालां सुरमणीयां ॥

तत्र दानि कुमारो च वसन्तको च परिचारको उत्पलको च लुब्धकपुत्रो मालको च लुब्धकपुत्रो एवंकृताध्यवसाया मनोहराये पदेहि हिमवन्तं पर्वतराजं प्रविशन्ति ॥

1. B yadi esha lu° M yadi evam̃ lu ° trâ açvatha i° B °trâ danyathâ i ° nam̃ imam a°. — 2. B °ṅguleyakam̃° BM °mâlâm̃ dadyatha | lubdha°. — 3. M °bdhakoputro garttà mama° B °trà gartto mama°. — 4. B anivâdanam̃° BM °bdhakaputrà mama°. — 5. BM °ram̃ niryàto niyame vinà°.

6. M °làm̃ àlambya mu° B °mbeshu mu°. — 7. BM °raṇam̃ abhyu° B °pemi | ma° BM °ràya vâ samà° B °gaman te bhaṇa° M °gamam̃ tato nti bhaṇa°. — 8. BM te bhaṇanti | lubdhako su° B °dhanu ito° M °dhanakumàram̃ ito evam̃ tvam̃° BM °rttehi hasti°. — 9. BM °puresmim̃° B °tuhyarabhinnam̃ vartteyà tam̃ ta° M °tubyam abhinna vartteyà. — 10. BM °çṛinoti vacanam̃ ‖.

11. B °yevadhyàvasito° BM °sito sahasrà ca mahâ° B °nadi ti° M °tirṇṇah. — 12. BM °kâ pi vyava° B °vyavasità ràjà pathàm̃ bha° M °jà patham̃ bha° B °veyà | asmàkam̃ yadi°. — 13. M °sudhanakumàram evam̃rùpe tyayenasmim̃ pa° B °rùpe bhyavanasmim̃ pa°. — 14. BM °tirṇṇo pi te pi nadim̃(M °di) vyâ°. — 15. BM mṛgavigame so (M °sa) nuyàtâm̃°.

16. B tântakshaṇena° M °dim̃ ham̃sasàra°. — 17. B shvàde kinna° M vyàḍe kinna° BM °ca paripâta°. — 18. M °màro vasanta° BM °parivàrako | u° BM °mà(B sà)lako(M °lavako) ca lubdhakaputro sarvakṛityaca(M °va)sàyo mano° M °pravisanti | B °çanti mano°.

मनोहरापि नानावर्णानि वरकुसुमानि ओलम्बमानानि आबन्धमाना गच्छति ॥ ते दानि कुसुमानि पच्छा दृष्ट्वा अनुगच्छन्ति । इह विश्रमित्वा श्यामा इतो गता ॥ इह मुहूर्तमासि अयमस्या पुष्पनिकरं इह कृतानि शुभमालानि निर्माल्यकानि चास्या वरकुसुमकर्णपूरधारिणीये देशेदेशे पश्यन्ति जानन्ति इतो गता श्यामा एवन्ते गच्छन्ति । आभरणानि नानाप्रकाराणि पन्थे पतितानि पश्यन्ति वनशाखेषु लग्नानि पश्यन्ति अन्यानि च चिह्नानि पश्यन्ति ॥ यथायथा च हिमवन्तं अनुप्रविशन्ति तथातथा बहूनि रत्नरत्नानि पश्यन्ति ॥ सुवर्णशृंगानि पर्वतानि पश्यन्ति रूप्यशृंगानि पश्यन्ति लोहकाराणि पश्यन्ति ताम्रकाराणि पश्यन्ति आरकूटकाराणि पश्यन्ति यशदशृंगानि पश्यन्ति अंजनपर्वतानि पश्यन्ति मनशिलपर्वतानि पश्यन्ति । किन्नरमिथुनानि क्रीडन्तानि पश्यन्ति । अन्यानि बहूनि आश्चर्याद्भुतशतानि पश्यन्ति । देशेदेशे किन्नरीगीतशब्दानि शृण्वन्ति सिंहनादशब्दानि च शृण्वन्ति शार्दूलना[133a]दशब्दानि च शृण्वन्ति । अच्छभल्लनादानि च शृण्वन्ति । मृगरुतानि च नानावर्णानि शृण्वन्ति । यक्षराक्षसरुतानि च शृण्वन्ति । पिशाचकुम्भाण्डरुतानि शृण्वन्ति ॥ नानाप्रकाराणि च औषधीसहस्राणि पश्यन्ति विद्याधराणि च पश्यन्ति ॥

तेहि गच्छन्तेहि काश्यपस्य ऋषिस्य आश्रमं दृष्टं बहुमूलपत्रपुष्पफलोपेतं वृक्षसहस्रसंछन्नं पानीयसंपन्नं च ॥ ते दानि तहिं आश्रमे प्रविष्टाः पश्यन्ति च तत्र आश्रमे काश्यपं ऋषिं वृद्धं महाभागं सपरिवारं आसन्नं ॥ ते दानि ऋषिस्य अभि-

1. B °rṇṇâni ca raktakusu° BM °olam̃bamâ° M °âbaddhamânâni ga° B °âbandhamâni gacchanti | . — 2[1]. BM °pacche dṛi° B °nti iti viçra°. — 2[2]. M iti viçra° BM °tvâ syâma ito gato gatâḥ | (B °tâ) iha°. — 3. B °hùrtta dàni aya° M °hùrttakam̃ dàni aya ° ha kṛitâye çu° B °kṛitâya çubhamâlâni dâlpakâni câ° M °lanirdâlpakâni câ° BM °câsya vara° M °sumâkarṇṇa° BM °rṇṇapuradhâriṇî deçedeçe paçyati jâ° B °cchante | M °cchantam̃ | . — 5. M °ṇâni nâpra° BC °gnâni lagna(C °gnam̃) paçya° B °nti | anyâni vaçecim̃hnâni° C °nyâni va cim̃hnâni°.

6. C °vantaparvatam anupra°. — 7. C °çṛim̃gâni paçyanti loha° B °rvatâni paçyanti | rûpya °hakârâni paçyanti tâmra° BC °tâmrakârâṇi(C °kâlâni) paçyanti harakûṭâkâ(C °hârakùṭâgâ)râṇi paçyanti || ye gantum̃ çringâni° (L °nti veçatuṅgaçṛiṅgâni° C °nti | uttudgaçṛim̃gâni) paçyanti am̃ja(C °añja)naparvatâni paçyanti manaçaila(C °nti | manaçilâçṛim̃ga)-parvatâni paçyanti | . — 10[1]. B kim̃nara°. — 10[2]. B °bahû âçca°.

11. B °gîtaçabdâni çriṇânti sim̃hanâdaçabdâni ca çriṇânti çârdûlanâlaça° C °sim̃hanâdaçabdâni va çṛi° lanâdaçabdâni çṛi°. — 12[1]. C °bhallânâdâni°. — 13[2]. BC piçaçcaku°. — 14. B °dhârâṇi ca paçyanti ca tehi°.

16. B °pasya çirisya âçra° C °vṛikshasahasam̃cha° BC °pânîyasam̃pannam̃ ca te dâ°. — 17. BC °âçramam̃ pra° C °vishṭoḥ praviçanti ca | ta° B °shṭâḥ praviçyanti ca | ta° C °pam̃ nâma ṛishim̃° BC °âsantam̃ | . — 18. C °sthitâḥ | B °sthitâ ṛishisya°.

वादनं कृत्वा सपरिवारस्य अग्रतो स्थिता ॥ ऋषिस्य भवति ॥ महात्मना इमेन कुमारेण भवितव्यं कृतपुण्येन पुण्यवन्तेन यो एषो इमं आश्रमं प्रविष्टः । प्रदेशो न क्षेमेणानुप्राप्तो ॥ तेन कुमारो अभिनन्दितो ॥ स्वागतं कुमारस्य निषीदाहि । एतानि शिविकानि ॥ कुमारो निषण्णो सपरिवारो । ऋषिणा क्षुद्रमधुसदृशानि फलानि अल्लीपितानि पानीयं च ॥ यत्र वेलां कुमारेण फला परिभुक्तानि पानीयं च पीतं ततो नं सो ऋषि पृच्छति ॥ किं कुमारस्य सुखसंवृद्धस्य इमहिं आगमनप्रयोजनं ॥ कुमारो आह ॥ काचित्ते भगवं एवंरूपा नारी अतिक्रमन्ती दृष्टेति ॥ ऋषि आह ॥ आम दृष्टा अल्लीना सा इमं आश्रमं मम पादौ वन्दित्वा गिरिवरस्य अनुतटेहि गता । तत्कुमारो इतो एवं आश्रमातो निवर्ततु । दुष्करं कुमारेण कृतं इमं तावत्प्रदेशं गच्छन्तेन किं पुन अतो परतरेण गतेन अगमनं मनुष्याणां इतो एवं निवर्ताहि ॥ कुमारो आह ॥ न शक्यामि भगवन्निवर्तितुं । या तस्या मनोहराये गति सा मम येनैव मार्गेण गता तेनैवाहं गमिष्यामि ॥ ऋषि आह ॥ अन्या किन्नरीणां गतिः अन्या मनुष्याणां । पक्षी पि किन्नराणां गतिं न संभुणन्ति कुतो मनुष्या । पक्षी पि तं प्रदेशं कथं विगच्छन्ति । किन्नरा यत्र गच्छन्ति मोदमाना रतिविहारं समनुभोन्तो अगम्यन्तं कुमार मनुष्याणां पथेहि । इतो एवमाश्रमातो निवर्ताहि ॥ पिता ते षष्टीनां नगरसहस्राणां ईश्वरो [133b] ननु उदारेहि परिभोगेहि कुमारेण क्रीडितव्यं रमितव्यं अनुभवितव्यं एतं अगम्यं देशं न शक्यसि गन्तुं ॥ कुमारो आह ॥ भगवं मरणं वा सा वा पश्यितव्या ॥

1². B °puṇyona pu° C °ntena | ye eshâ imam âçramâm̃ prade° B °vishṭâḥ prade°. — 2. BC pradeçam̃ kshe° C °menânuprâptaḥ ‖ . — 3¹. BC °ndito svâ°. — 3². C °rasya anurâgam̃ kumârasya ni°. — 4¹. B etâni viçikâni ku°. — 4². B °sharṇṇo sa° C °sharṇṇâ sa° B °vâro ṛi°. — 4³. C °dramadhumadṛi° B °phallâni a° C °allishitâni°. — 5. C °velâ ku ° tam̃ | tato tam̃ so ṛishi kumâram̃ pṛicchati | B tato na so ṛi ° cchati kim̃ ku°.

6. B °imâhi â° C °imam̃hi â° BC °gamanam̃ pra°. — 7². C kâçcitte bhagavanaivam̃ rû° BC °rûpayâ nâ° C °nârìm ati°. — 8². C âtma dṛishṭvâ allinâ mâ i° B °dṛishṭhâ a° C °çramam̃ ma pâdâ vandi ° sya anunadâhi gatâḥ B °sya anadhâ(*ou* ṭâ ?)hi gatâ tat ku°. — 9². C °tâvan pradeçam̃° B °cchante | kim̃° C °cchantam̃ | kim̃ punar ato° BC °paratena gatena(B °na | ) aga° C °itaḥ eva° B °evam̃ niva°.

11². C °gavam̃ niva°. — 11³. BC °tasya ma° B °gati | sâ° C °gatiḥ sâ mamayenaivam̃ mâ ° naivam aham̃°. — 12. C ṛishir âha ‖ . — 13¹. C anyâni ki° BC °tiḥ amanushyâṇâm̃ pa°. — 13². C pakshi pi ki ° ṇâm̃ gatiḥ na sam̃° BC °ṇanti | ku ° shyâ pakshì°. — 14¹. B °praveçam̃° C °dgachati ki°. — 14². BC °rativiraha samanubhonto âgamante(C °nto) ku ° shyâṇâm a(C °ṇâm̃ a)rthehi ito°.

16¹. C °evam̃ âçra°. — 16². C pitâs te sha° BC °shashṭhinâm̃° B °parigogehi ku ° ḍitaramitavyam̃ a° BC °nubhajita ° etam̃ âgamam̃ deçam̃ na çakyâmi gantum̃ ‖ . — 18². C bhagavan ma ° tavyo.

ऋषि महाभागो महामैत्रीविहारी कारुणिको । तस्य भवति ॥ से कुमारस्य अगम्यं देशं गच्छन्तस्य शरीरविनाशो भवेया ॥ सो ऋषि आह ॥ कुमार इमां रात्रिं इह आश्रमे वीतिनामेहि याव इह उद्देशे वानरा प्रतिवसन्ति । यो तेषां यूथपति सो मम अभिप्रसन्नो नित्यकालं मम पादवन्दो आगच्छति क्षुद्रमधुसदृशानि फलानि आदाय । तमहं वानरराजं अध्येषिष्यं । सो तव द्रुमस्य किन्नरराज्ञो निरतिं नाम किन्नरनगरं नेष्यति ॥ कुमारो ऋषिस्य वचनेन तहिं आश्रमे तां रात्रिं स्थितो रात्रिये च प्रभाताये कुमारो सिंहस्य व ओसरन्तस्य शब्दं शृणवति । कुमारो ऋषिकुमाराणां पृच्छति । कस्य एष ओसरणशब्दो ॥ ऋषिकुमारो आह ॥ एवं वानराधिपतिस्य ओसरन्तस्य शब्दो नित्यं एषो इह वेलाये क्षुद्रमधुसदृशानि फलानि आदाय तं ओसरन्तो द्रुमात् द्रुमं संक्रमन्तो अस्माकमुपाध्यायस्य पादवन्दो आगच्छति ॥ तदानि कौतूहलेव उत्थाय यतो तं वानरस्य ओसरन्तस्य शब्दं ततः निध्यायति । तेन सो वानरराजा दृष्टो द्रुमातो द्रुमं संक्रमन्तो आगच्छन्तो ॥ सो वानरराजा तं आश्रममागत्वा क्षुद्रमधुसदृशानि फलानि ऋषिस्य पुरतो निक्षिपित्वा निषण्णो ॥ ऋषि आह ॥ वानरराज करोहि मे व्यापारं ॥ वानरराजा आह ॥ भगवं करिष्यामि । आणपेहि ॥ ऋषि आह ॥ इमं कुमारं आत्मना चतुर्थं द्रुमस्य किन्नरराज्ञो निरतिं नाम किन्नरनगरं तहिं नेहि ॥ वानरो आह ॥ भगवन्नेमि ॥

सो दानि वानराधिपति ततो एव आश्रमातो आत्मना चतुर्थं कुमारं पृष्ठं आरोहयित्वा पर्वतानां शृङ्गतो शृङ्गं संक्रमन्तो द्रुमातो द्रुमं नचिरस्यैव द्रुमस्य किन्न-

1[1]. C °shi mâhâhâgo° B °ṇiko tasya°. — 1[3]. BC so kumâ°. — 2[2]. B °me vinâmehi | yâ° C virâ(*ou* nâ?)mehi | yâ° C °iha udeçe C °praviçanti. — 3. C °so mamâbhipra ° kâram̃ | mama° B °davanto âgacchati || kshu ° dâya tam a°. — 5[1]. C °rarâjâ adhye° B ° rarâja adhyashishyam̃ so tava°. — 5[2]. C °shyanti | .

6. C °sthitaḥ râtrim̃ ca pra° B °sthi râtrim̃ ca prabhâtâ ku° BC °mâro ca sim̃hasya ca osa° C °çrinoti | . — 8[1]. BC kasya esha te saraṇa(C °çaraça)çabdo || . — 9. C °nityatato nidhyâyati | esho° C °ranto drumâ drumam̃ sam̃° BC °manto | asmâ° C °davandanto âga°.

11. B °utthitâye tato tam̃ vâ° C °utthitâya tato tam̃ vâ° BC °çabdo tataḥ°. — 12[1]. BC tebi so° C °drishṭvo drumâ° B °cchanto so vâ°. — 12[2]. C °purataḥ nikshipitvâ pâdâ vanditvâ nisharṇno || B °sharṇno || . — 14[3]. BC °râjâ karo°. — 15[1]. C bhagavan kari°. — 15[4]. BC °tmanâ ca catu° C °sya kim̃nararâ ° ram̃ tarhim̃ neti | B °nehiḥ || .

17. C bhagavân nesi | . — 18. C °evam âçra ° turtho ca kumâram̃ prishṭham âruhyayitvâ° B °shṭham̃ ânayayitvâ° C °nâm̃ çringâto çrim̃gam̃° C °mâto drumanto na° B °mam̃ to naci° C °syaivam̃ drumasya kim̃nara° B °nnarararâjño° BC °kailâçasya° B °mûrddhnam anu° C °mûrdhnim anuprâptaḥ | B °pto paçya°.

रराज्ञो नगरं कैलासस्य पर्वतस्य मूर्ध्नि अनुप्राप्तो । पश्यति च कैलासस्य पर्वतस्य मूर्ध्नि द्रुमस्य किन्नरराज्ञो निरतिं नाम नगरं सर्वसौव[134a]र्णशुभकर्मनिर्मितं उद्यानसहस्रमण्डितं सर्वरत्नामयेहि पुष्करिणीतडागेहि मण्डितं सर्वरत्नामयेहि वैडूर्यफलकसोपानेहि सप्तरत्नवेदिकापरिक्षिप्तेहि उत्पलपद्मकुमुदपुण्डरीकसौगन्धिकसंछन्नेहि रतनामयेहि तटकेहि आयुक्तेहि नानारत्नविचित्राहि नावाहि प्लवन्तीहि वसन्तचित्राहि अन्यमन्येहि च नानाप्रकारेहि प्लवेहि प्लवन्तेहि । नानाप्रकारेहि पुष्पपत्रफलोपेतेहि द्रुमसहस्रेहि संछन्नं च अतिमुक्तकचम्पकवार्षिकमल्लिकासुमननवमालिकायूथिकोपशोभितं ॥ ते तहिंतहिं पश्यन्ति किन्नरमिथुनसहस्राणि क्रीडन्तानि । काचिज्जलदर्दरकानि वादेन्ति काचित् नानाप्रकाराणि वाद्यानि वादेन्ति मधुरेण च स्वरेण मनोहरां परिगायन्ति ॥ अभ्यन्तरनगरे च तूर्यशतशब्दानि शृणवन्ति मधुराणि च गीतशब्दानि शृणवन्ति ॥

अथ नु दानि तहिं किन्नरनगरस्य बाह्यतो उपवने स्थिता पश्यन्ति संबहुला किन्नरीयो प्रासादिका दर्शनीया अलंकृता आभूषिताः सौवर्णघटकहस्ता आगच्छन्ति तां पुष्करिणीं यत्र सुधनुः स्थितो उदकहारिं ॥ सुधनुरेता पृच्छति ॥ किं अत्र नगरे पर्वो यं । सो ईदृशो आमोदो ॥ ता दानि आहन्सुः ॥ न अद्य किंचित्पर्वो न उत्सवो । अपि द्रुमस्य किन्नरराज्ञो मनोहरा नाम धीता मानुषेहि नीता आसी सा बहुहि वर्षेहि आगता ताये आगताये द्रुमो च किन्नरराजो सर्व

1. C paçyanti ca kai° B °ti ca | kai° BC °lâçasya pa° C °mûrdhni dru° B °karmanivṛittam̃ | udyâna° C °hasrâṇi maṇḍitam̃° BC °ṇitaḍâgamaṇḍitam̃° B °vaiḍûyapha° C °phalaçâkhasopâṇehi sapta° C °utparapadu ° mayehi krandatehi ayukte° B °mayehi hya(*ou* jya?)-ntakehi ayukte° C °vicitrehi nâ° C °plavantohi savantaci° BC °citratâhi plavantehi anya ° ntehi nâ°.

6. C nânâprakâlehi plavantehi nânaprakâlehi plavantehi pu ° phale dru° BC °drumasâhasrehi sam̃channâ ca a° C °ktakapam̃cakavârshi° BC °mâlikayû° C °thikâ upaçobhito | tì ° bhitâ to tahim̃°. — 8. BC to tahim̃(B °tahim̃him̃) tahım̃ pa° B °çyanto ki° BC °ntâni kâ°. — 9. B °ladadarakâni° C °ladardelakâni° B °dyâni vâdyanti ma° C °dhyâni vâdayanti | madhureṇa sva° B °gâyanti abhya°. — 10. C °tûryyaçabdo çri° BC °ṇvanti | ma°.

12. C atha nûnam̃ dâni° BC °sthito paçyati sam̃(C °ti | sam̃)ba° B °riye prâ° BC °sâdiko darça° C °kritâ bhûshaṇabhûshitâḥ° B °kṛitâ abhû° C °ghaṭahastâ° BC °cchanti tâm̃ pushkaraṇi ya° C °dhanaḥ sthi° B °hârì su°. — 14[1]. BC °dhanunâtho(C °tha) pṛi°. — 14[2]. C bhadre kim̃ a ° re parto yam̃ | . — 15[1]. C so idriço âtmovo | B °do tâ°. — 15[2]. C tâm̃ dâ ° hatsuḥ | B °nsuḥ na°. — 15[3]. C na kim̃cid adya pa° BC °parto na utsavo api°.

16. C °druma ki° B °sya kim̃nara° C °mânushyehi nîtâ âsit sâ ba° B °rshehi âgato tâye âgatâ° C °rshehi âgato | tâye dru° B °dṛiçam̃ âmodaḥ ‖ .

च नगरं प्रीतं तत्रैष एदृशो आमोदः ॥ सुधनु पृच्छति ॥ कहिं उदकं इमं नीष्यति ॥ आहन्सु ॥ सा मनोहरा स्नापयिष्यति । तस्या मनुष्यगन्धमपनयिष्यति ॥ तेन कुमारेण अंगुलीयका पश्चिमे उदकघटे प्रक्षिप्ता यथा ताहि किन्नरीहि न दृष्टा ॥ मनोहरा स्नायति च अंगुलीयका स्नायन्तीये ततो घटकातो उत्संगे पतिता ॥ मनोहराये सा अंगुलीयका दृष्ट्वा परिज्ञाता । ताये एतद्भूषि । सुधनुकुमारः आगतो मम अर्थाय । सुकुमारो राजपुत्रो कथं सो इमामगम्यां दिशामागतो ॥ सा दानि त्वरितत्वरिता वस्त्राणि प्रावरित्वा अश्रुकण्ठा रुदन्मुखा मातापितॄणां प्रणिपतित्वा आह ॥ [134b] यो मम जम्बुद्वीपे भर्ता सो आगतो सुधनु नाम राजपुत्रो सुबाहुस्य राज्ञो एकपुत्रो ॥ द्रुमो किन्नरराजा न पत्तीयति । पुत्रि न शक्यं मानुषेहि इमां दिशामागन्तुं ॥ मनोहरा आह ॥ न हि तात व्यक्तमागतो ॥ द्रुमो किन्नरराजा पृच्छति ॥ किं त्वया स्वयं दृष्टो उताहो परतो श्रुतो ति ॥ सा आह ॥ न मे स्वयं दृष्टो नापि परतो श्रुतो अपि मे स्नापयन्तीये सुधनुस्य अंगुलीयका उत्संगे पतिता ॥

द्रुमेण किन्नरराज्ञा उदकहारीयो शब्दापितायो । ता दानि शब्दापिय पृच्छीयन्ति ॥ क्वचिद्वो उदकहारिं गताहि पुरुषो दृष्टो ॥ ता आहन्सुः ॥ महाराज दृष्टो किन्नरकुमारः प्रासादिको दर्शनीयो आत्मना चतुर्थो पुष्करिणीये कूले ॥ तस्य भवति ॥ सो एवमेषो कुमारो मनोहराये ति । कथं सो शक्यति इमां दिशामागन्तुं ॥ सो दानि तां धीतरं पृच्छति ॥ मनोहरे प्रविशतु सुधनु राजकुमारो इमं राजकुलं ॥ सा आह ॥ तात प्रविशतु ॥ सो इह मम प्रेमेन आगतो

1[1]. C sudhanakumâro pṛi°. — 2[1]. B ahansu sâ ma° C âhatsuḥ sâ°. — 2[3]. C tasya mâ° B °ndham ayenayishyati | C °ndham ayenalipyati | . — 3. B °aṁguliyakâ paçyime° C °lîyekâ paçyimaḥ u ° kshiptâḥ | ya° B °kshipto ya ° nnarina dṛi° BC °dṛishṭvâ ma°. — 4. B °aṁguliyakà snâyatiye | tato° C °lîye snâyatiye | tataḥ gha ° utsaṅge pa° BC °titâ ma°. — 5[1]. C °râye sâ aṅguli° C °jñâtâyaita° B °tâ tâye°. — 5[2]. B °shi su°. — 5[3]. C sudhanakumâro â° BC °rthâya su°.

6. B sudhanukumâ° B °m âgato sâ dâ°. — 7. B °tatvaritvâ va° C °ritaṁ va° BC °nmukhâṁ mâ°. — 8. C °dhana nâma râ ° sya râjñaḥ e°. — 9. B °rarâjà patipâttiyati | . — 10[1]. B putra na ça° C putraṁ na ça ° nushyehi°.

11[1]. B °cchati kiṁ°. — 11[2]. B kiṁ taye sva° C kin teye svayaṁ dṛishṭvâ u ° to çruteti ‖. — 12[2]. C tâta na me svayaṁ dṛishṭvà nâpi parate çru ° sya râjakumârasya âṅguliyakâ° B °aṁguleyikâ°. — 14[1]. C °riyo kinnarîyo ça° B °tâyo tâ dâ°. — 14[2]. B °yanti kva°. — 15[1]. BC kvacid vâ u° C °hâriṁ ga°. — 15[2]. C °âhaṁsuḥ | B °nsuḥ ma°. — 15[3]. C °nnarakulo prâ° BC °shkariṇî taṁ ku(C °kû)le ta°.

17[1]. C °evam eyo ku° B °yeti ka°. — 17[2]. BC °kyato imâṁ°. — 18[1]. C °tâṁ râjadhîtâraṁ pṛichanti B °tâṁ dhataraṁ pṛicchati ma°. — 18[2]. C °dhano râ°. — 19[1]. B so âha ‖ . — 19[2]. BC °tu so i°. — 19[3]. C °mama prasnena° BC °bahûni ca te ° tkâro taṁ ba°.

बङ्क च तेन मम निदानं पितृसकाशातो अप्रियो असत्कारो । तेन बन्धनवधदुःखो अनुभूतो न च तेन अहं कदाचित्परित्यक्ता । ततो सुधनु कुमारो पितरेण सुबाङ्कना बन्धनागारे बन्धित्वा अहं विसर्जिता । सो एष मुक्तो समानो मम पृष्ठतो आगतो ॥ द्रुमेण किन्नरराज्ञा अमात्या आणत्ता ॥ शीघ्रं नगरं अलंकारापेथ यावच्च राजकुलं यावच्च असुरका पुष्करिणी विततवितानं कारापेथ चित्रपुष्पपरिक्षिप्तं अवसक्तपट्टदामकलापं सिक्तसंमृष्टं मुक्तपुष्पावकीर्णं सर्वगन्धोदकसिक्तं । ये मम नगरे प्रधानपुरुषाः चतुरंगबलकायो सर्वे ते मम जामातुः प्रत्युद्गच्छन्तु छत्रध्वजपताकानि च आदाय ॥ अमात्येहि वचनमात्रेण सर्वं प्रतिजागृतं महता समृद्धीये प्रत्युद्गमनं कृतं ॥ मनोहरापि महारहेन अंशुकेन प्रावृता सर्वालंकारविभूषिता बहूहि किन्नरसहस्रेहि परिवृता तूर्यसहस्रेहि वाद्यमानेहि प्रत्युद्गता ॥ सा दानि सुधनुं दृष्ट्वा मूर्ध्नेन पादेहि पतिता मुखेन च केशेन च पादानि संपरिमार्जति ॥ एवं सुधनु महता विभूषाये महता समृद्धीये द्रुमस्य किन्नरराज्ञो नगरं प्रवेशि[135a]तो यावद्राजकुलं द्रुमेण च किन्नरराज्ञा अभिनन्दितो उत्सङ्गे निवेशितो आश्वासितो च ॥ एषो ते नगरो सर्वसौवर्णो उद्यानसहस्रमण्डितो अनन्तप्रकाशो इह मम धीतराये मनोहराये सह क्रीडाहि रमाहि प्रविचारेहि ॥

सुधनु दानि किन्नरनगरे बहूनि वर्षाणि प्रतिवसित्वा क्रीडित्वा रमित्वा प्रविचारेत्वा सर्वोद्यानेषु संवर्तनीयं अनुभवित्वा मनोहरामामन्त्रेसि ॥ मनोहरे जानसि त्वं यथा अहं मातापितॄणां एकपुत्रको प्रियो मनापो । अहं तव प्रेमेन अना-

1. BC °bandharo vadha° B °anuttaro na ca taṁ ahaṁ° C °na ca tam ahaṁ ka ° tyaktaḥ | . — 2. C tataḥ sudhanaku ° huno bandha° BC °nâgâraṁ ba° B °rjjitâ so°. — 3. BC °mukta samâ° C °mâno prishṭha°. — 4[1]. C °ṇattâḥ B °ṇattâ çi°. — 4[2]. C çrîghraṁ nagaram alaṁ° B °kârâyetha° C °tha | yâva ca râ ° tradushyapari° C °avaçakta° B °saktapaṭadâ° B °siktasaṁsṛiktaṁ mu° C °siktasaṁsṛishṭaṁ mu° B °ndhodakaṁ siktaṁ ye ma° C °ktaṁ yaṁ ma°.

6. BC ye (C yaṁ) mama° C °purushâç caturaṅgabalakâye sarve° B °catulaṁgavarakâyo sa ° dgacchantuṁ ccha°. — 8. C °vacanamâtyehi vacanamâtyena sa° BC °sarvapra° B °gṛihaṁ ma°. — 9. C °hara pi mahârasena aṁ° B °harâye pi mahârahena âṁçu° C °prâvṛitâḥ sa° C °bahudbhi ki ° dgato | . — 10. BC °sudhanaṁ dṛi° C °mûrdhnehi pâ° B °mûrddhne pâ° C °dâni saparimârjeti | .

11. C °dhanakumâro mahatâ vi ° râjñaḥ naga° BC °çito | yâ° C °yâvac ca râja° BC °drumena ca° C °râjño abhinandito usaṁge sarve vaçito âçvâ° B °tsaṁge sarvato â° BC °to ca esho°. — 14. C eshonte na° B °ro savasau° BC °noharâye sarva krîḍâ ° cârehi sudha°.

16. C sudhanaḥ dâ ° rshâṇi praviçitvâ krî° B °prativaçitvâ krî° C °rvo pradhâneshu saṁvarttanîyam anubhavetvâ manoharâm âmantrayasi | B °shu saṁvarttanîye a ° râyâm âmantresi mano° — 17. B °tvaṁ | ya ° yo manyaye haṁ ta° C °nâpo haṁ ta°. — 18. B °tava premyena a° C °premena anâ ° rvakâṇi ujhi° B °rvakâçi ujhitvâ âtma° C °tmanâṁ pari° B °gato iha me âgato iha me a° C °praviçantasya B °ntasya tato°.

पृच्छित्वा मातापितृणां सर्वकानि उज्झित्वा आत्मना परित्यागं कृत्वा इह आगतो इह मे अद्य बहूनि वर्षाणि प्रतिवसन्तस्य । ततो आमन्त्रेहि मातापितरं गमिष्यामि हस्तिनापुरं ॥ ताये मनोहराये मातापितृणां आरोचितं ॥ द्रुमेण किन्नरराज्ञा सुधनु पृच्छीयति ॥ कुमार गमिष्यसि मातापितृणां सकाशं ॥ कुमारो आह ॥ यदि तात अभिप्रेतं ततो गमिष्यामि ॥ द्रुमो आह ॥ विसर्जयिष्यामि इति ॥ यम्भका नाम यक्षा किन्नराणामाणत्तिकराः ॥ राज्ञा यम्भका यक्षा आणत्ता ॥ मम जामातारं सपरिवारं मनोहरासहितं येन हस्तिनापुरं नेथ प्रभूतं च रत्नरतनं ॥ तेहि सुधनु कुमारो सपरिवारो मनोहरा च किन्नरनगरातो शयनगता एवमुत्क्षिपित्वा प्रभूतं च रत्नरतनं हस्तिनापुरमानेत्वा राजक्ये उद्याने स्थपिता ॥ प्रभाताये रात्रीये कुमारो सुधनु विबुद्धो हस्तिनापुरे व भेरीघोषं शृणोति जनशब्दं च ॥ तस्य भवति ॥ कहिं अहं हस्तिनापुरं आनीतो ॥ इमं राजक्यं उद्यानं पश्यति । तानि रत्नमयानि पर्यंकानि यथा प्रज्ञप्तानि मनोहरां च तं त्रिवर्गं परिवारं प्रभूतं च रत्नं । कुमारो प्रीतो संवृत्तो यथाभिप्रेतं स्वकं नगरमागतो ॥

कुमारस्य हस्तिनापुरा गतस्य राज्ञा सुबाहुना मार्गणा कारिता महता उद्योगेन । यं कालं राजा कुमारस्य प्रवृत्तिं न उपलभति तस्य भवति । मृतो भविष्यति कुमारो मनोहरां मार्गन्तो ॥ तेन राज्ञा कुमारस्य सुधनुस्य मृतस्य कार्याणि कारितानि ॥ सर्वस्य अधिष्ठानस्य भवति । [135ᵇ] मृतो सुधनु ॥ तहिं दानि राजक्ये उद्याने अग्रद्वारेण उद्यानपाला निर्धाविता उद्याने पताकानुच्छ्राप-

2. BC °tremi mâ °shyâmi | ha °ram̃ tâ°. — $3^{1}$. C °triṇâm âro°. — $3^{2}$. C °ṇa kim̃nara° BC °râjño su° C °dhanu kumâro prichîyeti | B °yati kumâ°. — $4^{1}$. B kumâre ga ° pitriṇâm̃ sakâçam̃ || . — $4^{2}$. C yadi tota a°. — $5^{2}$. C °shyâmîti.

$6^{1}$. C yam̃bhakâ° B yambhakâro nâ° BC °yaksho ki°. — $6^{2}$. C °kâ nâma yaksho âṇatto B °ṇattâ mama°. — 7. BC °jâmâtâ saparivâro mano ° hitakâ yera hasti ° tha | pra° C °tnaratnam̃ B °nam̃ tehi°. — 8. BC tehi kumâro ca(C °roçca) su° C °dhana sapari ° nnaragarâto° B °evam ucchipitvâ° C °ca ratnam̃ hasti° B °ca ratnam̃ ratanam̃° C °puram ânîtvâ râjanye udyânam̃ sthâpitâḥ B râjavye udyânam̃ sthapitvâ pra°. — 9. BC °pure ca bheri° B °rîpâmam̃ çrim̃ṇoti° C °rîpâmam̃ çabdam̃ çri ° bdam̃ ca çriṇoti | .

$11^{1}$. BC °vati kahim̃°. — $11^{2}$. B °ham̃ asti ° nîtâ | . — $11^{3}$. B °râjanyam̃ u° C °râjanyam udyânâm̃ kumâro paçyati | . — 12. C °ratnâmayâni pa ° noharâye ca tam̃° B °harâ ca tam̃° C °bhûtam̃ ratnam̃° BC °tnam̃ kumâ°. — 14. BC °purâto tasya râjño subâhunâ mârgeṇâ ka° B °yena yam̃°. — $15^{1}$. B yam̃ kâram̃ râ° C °râjñâ ku ° labhyati ta° B °bhaveti mri°. — $15^{2}$. BC °shyati | ku ° nto tena°.

16. B °tâni sarva°. — $17^{1}$. C °adhisthânasya° BC °vati mri°. — $17^{2}$. C °dhana B °dhanu kahim̃ dâ°. — $17^{3}$. B kahim̃ dâ° B °râjavye udyâne a° C °patâkâ uyamanti âga° B °cchrâyapâtonti âga° BC °çyati | tam̃° C °dhanu kumâram̃ mano ° varga pari ° shṭvâ va punar dhâva ° viçyaḥ mahâ° B °vishṭâ mahâ°.

यन्ति आगता च उद्यानं पश्यन्ति तं च सुधनुं मनोहरां च तं च त्रिवर्गं परिवारं रत्नमयानि च पर्यंकानि महान्तं च रत्नराशिं दृष्ट्वा च पुनः धावन्तो हस्तिनापुरं प्रविष्टा ॥ महाजनकायो पृच्छति क्षेमं । ते आहन्सुः । क्षेमं सुधनु कुमारो आगतो हि । सो एव प्रीतो भवति ॥ तेहि राजकुलं गत्वा उद्यानपालेहि राज्ञो सुबाहुस्य आरोचितं ॥ महाराज दिष्ट्या वृद्धि सुधनु कुमारो आगतो ॥ राजा श्रवणमात्रेण प्रीतो संवृत्तो सर्वञ्च राजकुलं । तेषां उद्यानपालानां विपुलो दायो दिन्नो ॥ राजा सुबाहु सामात्यपरिजनो देवी च सुधनुस्य माता सर्वं च अन्तःपुरं उद्यानं निर्धावितं कुमारं द्रष्टुं सर्वञ्च नगरं कुमारस्य सुधनुस्य आगमनशब्दं श्रुत्वा मनोहराये च । अन्तरो जनस्य नास्ति हस्तिनापुरातो राजकृत्यं उद्यानं निर्धावन्तस्य कुमारं द्रष्टुं मनोहरां च ॥ सुधनु मातापितरं दृष्ट्वा मूर्ध्नेन निपतितो मनोहरा च श्वश्रूश्वशुरं च दृष्ट्वा मूर्ध्नेन निपतिता ॥ कुमारो पितरेण सुबाहुना सार्धं सुवर्णालंकृतं हस्तिनागमारुहित्वा हेमजालसंछन्नं महता राजानुभावेन महता राजर्द्धीये महतीये वियूहाये महतीये विभूषाये हस्तिनापुरं प्रवेशितो ॥

एवं समेन्तु सत्वा सर्वेहि प्रियेहि अबोधिप्रहीणा ।
यथ तस्मिं समयस्मिं समागतः किन्नरिये सुधनुः ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन सुधनु नाम कुमारो अभूषि । न एतदेवं द्रष्टव्यं ॥ तत्कस्य हेतोः ॥ अहं सो भिक्षवः तेन कालेन तेन समयेन सुधनुर्नाम कुमारो अभूषि । अन्यः स तेन कालेन तेन समयेन सुबाहुर्नाम राजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषो भिक्षवो राजा शुद्धोदनो तेन कालेन तेन समयेन सुबाहुर्नाम राजा अभूषि ॥

3[1]. C °ti | kshaman te âha° B °ksheman te âha°. — 3[2]. BC °nsuḥ kshe°. — 3[3]. C °sudhanakumâro âgato hi yo evaṁ çriṇoti sudhana âgatehi so e° B °hi so e°. — 4[1]. C so evaṁ prî° B °vati tehi°. — 4[2]. B °citaṁ mahâ°. — 5[1]. B °râja drishṭhâ vriddhi° C °râja drishṭvâ hi vriddhi sudhanakumâ° BC °gato râ°. — 5[2]. B râja çra° kulaṁ teshâṁ°.

6. C teshâm udyâ° B °pâlânâṁ vi°. — 7. C °devisya sudhanasya mâ° ḥpuram udyâ° BC °dhanasya° C °gamanaṁ çabdaṁ° BC °harâṁ ca anta°. — 9. C antaḥpuro ja° C °hâstinâpurato râ°. — 10. C sudhana mâ° harâçca çvasruçvasuraṁ dṛi° B °harâ ca svaçrûsvasuraṁ°.

11. C °ruhi hema° BC °cchannâṁ(C °nnâḥ) nagaraṁ câlaṁkṛitvâ mahatâ râjânu° ddhiye mahatâ(B °tâyc) viyû° B °purapraveçito ||. — 14. C evaṁ çâmyantu samanvâ sarve° BC °yehi bo° ṇâ ya°. — 15. C yathâ ta° B yathâ tasmiṁ kâle tasmiṁ sama° BC °samaye samâgataḥ(C °to) kiṁnarîye sudhanuḥ ||.

16[2]. C °lu bhiksha° dhanaṁ nâma ku° B °dhanuṁ nâma ku° B °shi na e°. — 17[1]. C naitad e°. — 17[3]. C °kshavas tena kâ° dhananâma ku°. — 18. C anyo so tena kâ°. — 19[1]. B °vyaṁ tat ka°. — 19[3]. B eshâ bhi°.



IMPRIMERIE NATIONALE

अन्या सा तेन कालेन तेन समयेन सुधनुस्य माता अभूषि । न एतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भि[136a]क्षवो माया देवी तेन कालेन तेन समयेन सुधनुस्य माता अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवं अस्यादन्यः स तेन कालेन तेन समयेन सुधनुस्य परिचारको वसन्तको नाम अभूषि । न एतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः छन्दको तेन कालेन तेन समयेन सुधनुस्य परिचारको ॥ अन्यो सो तेन कालेन तेन समयेन उप्पलको नाम लुब्धकपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो राहुलो उप्पलको नाम लुब्धकपुत्रो अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन मालको नाम लुब्धकपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो आनन्दस्थविरो तेन कालेन तेन समयेन मालको नाम लुब्धकपुत्रो अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन काश्यपो नाम ऋषि अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः महाकाश्यपः स्थविरः तेन कालेन तेन समयेन अनुहिमवन्ते काश्यपगोत्रो ऋषि अभूषि ॥ अन्यो स तेन कालेन तेन समयेन अनुहिमवन्ते वानरराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो कण्ठको अश्वराजा तेन कालेन तेन समयेन अनुहिमवन्ते वानरराजा अभूषि ॥ अन्यो स तेन कालेन तेन समयेन कैलासमूर्ध्नि द्रुमो नाम किन्नरराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो महानामो शाक्यो तेन कालेन तेन समयेन द्रुमो किन्नरराजा अभूषि ॥ अन्या सा तेन कालेन तेन समयेन मनोहराये माता अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भिक्षवः यशोधराये माता तेन कालेन तेन समयेन मनोहराये माता अभूषि ॥ अन्या सा तेन कालेन तेन समयेन मनोहरा किन्नरी अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भिक्षवो यशोधरा तेन कालेन तेन समयेन मनोहरा किन्नरी अभूषि । तदापि एषा मया खेदेन लब्धा ॥

1[1]. BC anyo so tena° B °bbûshi na e°. — 1[2]. C naitad e°. — 2[1]. C °heto | . — 2[2]. C eshâm̃ bhikshavaḥ mâ ° dhanasya°. — 3. C °shmâkam̃ evam̃m asyâ ° dhanasya parivârako° B °parivâroko° BC °abhûshi | tat kasya°. — 5[1]. C °hetor eshaḥ bhi°. — 5[2]. C °shaḥ bhikshavo chandakâ tena kâ ° dhanasya° BC °parivârako | .

6. C °lena samayena utpalako° B °shi nai°. — 7[3]. C °kshavaḥ râhulo utpalako°. — 8. C anyo sa tena kâ ° yena sârako nâ° B °yena sâlako nâma lubdhako putro abhûshi nai°. — 9[2]. C °hetor esha°. — 9[3]. C °yena sârako nâ° B °yena sâlako nâ°. — 10. C °çyapagotro ṛishi a°.

11[1]. B °vyam̃ tat ka°. — 11[3]. C °çyapo sthaviras tena°. — 13. B °bhûshi nai°. — 14[3]. C °râjo tena°. — 15. C °sas tena kâ° BC °kailâçamûrddhni dru° B °shi nai°.

17. B evam̃ bhi° C °samayena samayena dru°. — 18[1]. BC anyo so tena kâ° C °harâyena manoharâye mâ° BC °shi nai°. — 19[1]. C °hetor esho°. — 19[2]. BC esho bhi°.

21[1]. BC °vyam̃ tat ka°. — 21[3]. C esho bhi°.

विचित्रगम्भीरकथो बहुश्रुतो
किलेशघाती परवादिमर्दनो ।
स भिक्षु शोभेत स्वयंभुशासने
नभे व चन्द्रो परिपूर्ण[136b]मण्डलो ॥

इति श्रीकिन्नरीजातकं समाप्तं ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तदर्थं अभिसंभावयित्वा श्रावस्त्यां विहरति शास्ता देवानां मनुष्याणां च विस्तरेण निदानं कृत्वा भिक्षूनामन्त्रयति ॥ सुकुमारो हं भिक्षवो परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य पिता शाक्यो त्रयो प्रासादा कारयत् हेमन्तिकं ग्रैष्मिकं वार्षिकं मम येव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य भिक्षवः पिता शाक्यो तेहि प्रासादेहि कूटागाराणि कारयेत् उल्लिप्तावलिप्तानि वातास्पर्शार्गडानि पिहितवातायनानि धूपनधूपितानि ओसक्तपट्टदामकलापानि मुक्तपुष्पावकीर्णानि मम एव क्रीडार्थं रत्यर्थं प्रविचारार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि कूटागारेहि पर्यंका कारयेत् सुवर्णमयानि रूप्यमयानि रत्नमयानि षोडशगोणिकास्तृतां पत्तिकास्तरणां चित्रास्तरणां फलिकास्तरणां उभयतो बिम्बोपधानां लोहितकोपधानां अवदातप्रत्यास्तरणां मम एव क्रीडार्थं रत्यर्थं प्रविचारार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य

1. B °kathâ ba° C °kathâ çruto kileçayâti paravâdimarthano | B °vâdîma°. — 3. B °kshu sobhesha sva° C °çobhetha sva° B °maṇḍale || . — 5. C çrimahâvastuavadâne kinnarijâtaka sa°.

6. C °yadartha samu° tadartham abhisabhâ° B °bhisam̃vâdayitvâ° C °vânâm̃ ca ma° C °bhikshuṇâmantra° B °bhikshûṇâma°. — 8[1]. C °kshavaḥ pa° B °kshavo suku° C °mâras tasya°. — 8[2]. C °kshavo suku ° sya paramasukumârasya pi° B °prâsâdi kârayat || hamanti° C °prâsâda | kâmayet | hamanti° BC °rshikam̃ samaye ca kriḍâ° B °ḍârtham̃ atyartham̃ paricâraṇârtham̃ suku°. — 10[1]. C °paramasukumârasya me° B °paramasukumâro ta°. — 10[2]. C °kshavo su° B °paramasukumâro tasya me bhikshavaḥ pi° C °paramasukumârasya pitâ° BC °tehi prasâ° B °kâyayet || ulli° C °kârâpayet | ulli° BC °ulliptâ ca liptâni vâtâni vâtâspa° B °ḍâni piḍitâ vâtâpanetâni dhûpa° C °ḍâni piḍitavâtâyatanâni dhûpa° C °oçaktapaṭṭa° C °evam̃ kriḍârtha ratya°.

13. C °paramasukumâro ham̃ bhikshavaḥ paramasukumâro B °paramasukumâro tasya°. — 14. BC °ryam̃kam̃ kârayeti | suva(C sva)rṇṇa° C °ratnamayâni sho° B °pratyastaraṇâm̃ | mama° C °evam̃ kri ° tyartha pra°.

18[1]. C °kshavo pa° B °mâro ta°. — 18[2]. BC °tehi paryaṅkehi° C °vimânâni° B °payet | rajoro(?)kram̃ upaniyayâ ma° C °çuklam̃ upaniyate yâ ma ° ṇârtha | .

परमसुकुमारस्य पिता शाक्यो तेहि पर्यंकेहि वितानानि कारापयेत् रजोशुक्रं उपनियमे मम क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधमनुलेपनमुपस्थापये सय्यथीदं अगुरुचन्दनं कालानुसारिं तमालपत्रं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवो परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधानि वस्त्राणि उपस्थापये । सय्यथीदं काशिकसूक्ष्माणि कम्बलसूक्ष्माणि मम क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकु[137ª]मारो । तस्य मे भिक्षवो सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधां मालां उपस्थापये । सय्यथीदं अतिमुक्तकचम्पकवार्षिकां वातुष्कारी इन्दीवरं दमनकं देवोपसंहितं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः पिता शाक्यो विविधं भोजनं उपस्थापये । शालिं विचित्रकालकं अनेकसूपरसव्यंजनं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो ममानन्तरेण भुक्ताविस्य चक्रवर्त्तियोग्यां मालामुपनामयेत् मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो पंच कामगुणां उपस्थापयेत् । सय्यथीदं नाट्यं गीतं वादितं तूर्यं स्त्रियो च मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधानि यानानि उपस्थापयेत् । सय्यथीदं हस्तियानानि अश्वयानानि नावायानानि शिविकायानानि मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकु-

2. B °masukumârasya tasya°. — 3. B °bhiksha su° C °payet sayya ° nam̃ kârânuçâlim̃ tamâ° B °kâlonusârim̃° C °evam̃ kri ° tyartha paricâraṇârtha | . — 5[1]. C °kshavaḥ pa° B °kumârasya tasya°. — 5[2]. C °kshavo su ° payet | .

6. C °thîda kauçikaçûkshmâ° BC °kshmâni ka° C °laçûkshmâ ° ḍârtha ra ° ṇârtha | . — 8[1]. C °paramasukumâras tasya° B °mâro tasya°. — 8[2]. C °kshavaḥ su° BC °vividham̃ mâlâm̃ (C °lyam̃) u° C °payet | . — 9. C sadyathi° B °muktikacampa° C °rshikacârukkârî i° B °kâm̃ vânushkâ° C °devoprasam̃° BC °evam̃ kri° C °ṇârtha | .

11[1]. BC °mâro tasya°. — 11[2]. C °bhojanam upasthâpayet | . — 12. C sadyathîdam̃ çâlim̃ vi ° kârakam̃ a ° vyañjana mama kri° B °evam̃ kri° C °ṇârtha ‖ B °ṇârtham̃ suku°. — 13[1]. BC °mâro tasya°. — 13[2]. B °çâkyo yam̃ca kâmagu° C °ntare bhu ° yogyam̃ mâlâm upaṇâmayet | ma ° ḍârtha ratyartha pa ° ṇârtha | . — 15. C °mâro tasya°.

16. B °kyo yam̃ca kâmaguṇâm upa° C °guṇâ am̃vasthâ°. — 17. C sadyathi ° didam̃ tû ° ḍârtha ratyartha pa ° ṇârtha | . — 18. BC °mâro tasya°. — 19. C °kshavo su°. — 20. B °açvajâni nâvâ° C °açvayânâni vâyânâni çi°.

21. BC °mâro tasya°.

मारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विचित्रा कुथां उपस्थापयेत् सिंहचर्मपरिवाराणां व्याघ्रचर्मपरिवाराणां द्वीपिचर्मपरिवाराणां पाण्डुकम्बलप्रतिच्छन्नानां सनन्दिघोषाणां वैजयन्तिकानां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो निर्यान्तस्य छत्रं धारापयेत् मा कुमारस्य कायं आतपो रजो शुक्रो वा परिदहे मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य चतुर्दिशमुद्यानानि कारापयेत् मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि उ[137b]द्यानेहि चतुर्दिशं पुष्करिणीं कारापयेत् उत्पलपद्मनलिनीसौगन्धिकप्रच्छन्नां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि उद्यानेहि चतुर्दिशं प्रासादां कारापये उच्चां महन्तां प्रगृहीतां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥

सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य एतद्भूषि ॥ संबाधो पुनरयं गृहवासो अभ्यवकाशं प्रव्रज्या तु । न शक्यं अगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं यं नूनाहं अगारस्यानगारियं प्रव्रजेयं ॥ स खल्वहं भिक्षवः अकामकानां मातापितृणां अश्रुकण्ठानां रुदन्मुखानां अलूहं गृहवासं हस्तोक्तं चक्रवर्तिराज्यमपहाय अगारस्यानगारियं प्रव्रजितो पुनस्समानो येन वैशाली नगरी तदवसारि तदनुप्रा-

1. C °vicitrâm̃ ku ° payet | sayyathidam̃ sim̃hacarmmacarmapa° B °yet | sim̃° C °pâṇḍakambarapra ° ḍârtha pra ° ṇârtha | . — 4[1]. C °masukumârasya me bhi° B °mâro tasya°. — 4[2]. C °payet || sayyathidam̃ kumâra° B °yet || mâ ku° BC °kâye â° B °çuku vâ pa° BC °paridehe ma° C °ratyartha pra ° ṇârtha | .

6. B °sukumâras tasya°. — 7. C tasya bhikshavo su° BC °payet | ma° C °evam̃ krîḍârtha ratyartha pra ° ṇârtha | . — 8. B °masukumâras tasya°. — 9. C °kshavo su° B °kyo hi udyâ° C °shkaraṇîm̃ kârâpayet sadyathidam̃ utparamaralinisau° B °dumamanaḍinisau ° cchannâ ma° C °cchannâḥ ma ° tyartha pra ° ṇârtha | .

11. B °mâro tasya°. — 12. C °prâsâdam̃ kârâpayet | sayyathidam uccâm̃ mahantim̃ pragṛi° B °mahatâm̃ pra° C °tâm̃ mamaivam̃ kri°. — 15[1]. B °mâro tasya° C °mâro me ta°. — 15[2]. C me tasya bhi°.

16[1]. B sam̃bodho° C °vâso rajasâmâvâso abhya° BC °bhyavakâçâ pravrajyâtum̃ na ça°. — 16[2]. C °dhyâvasato | ekânta° BC °khitam̃ ekântanava(C °vam̃)dyam̃° B °brahmaccaritum̃° BC °pravrajyeyam̃ || . — 18. C °khânâm̃ alûham̃° B °gṛihadâsam̃° BC °hastokam̃ cakra° C °râjyam̃ apahâ° BC °s samâno(C °no | ) evam̃ vai° B °vasârita tad anu° BC °prâpto (C °ptaḥ | ) vaiçâlyâm̃ nagaryâm̃ || te°.

तेन सह आलापसंलापेन आसामि ॥ तस्या दानि शुशुमारीये एतदभूषि ॥ याव सो वानरो जीविष्यति तावदेषो मम स्वामि तहिं गत्वा वानरेण सार्धं आलापेन आसिष्यति । ततो तं वानरं मारापेमि तेन च मारितेन एषो मे स्वामिको न भूयो तं प्रदेशं गमिष्यति ॥ सा दानि शुशुमारी ग्लानकं कृत्वा आसति ॥ सो तां शुशुमारो पृच्छति ॥ भद्रे किं ते कृत्यं किन्ते दुःखं किन्ते अभिप्रेतं आख्याहि किन्ति देमि आणपेहि ॥ सा नं आह ॥ आर्यपुत्र मर्कटहृदय[181b]स्य मे दोहलो । यदि मर्कटस्य हृदयं लभामि एवं जीवेयं अथ न लभामि नास्ति मे जीवितं ॥ सो नां आह ॥ प्रसादं करोहि कुतो इह समुद्रे मर्कटस्य प्रचारो यदि अन्यस्मिं अभिप्रायो जलचरे तव उपस्थपेमि ॥ सा दानि आह ॥ न मे अन्यत्र अभिप्रायो मर्कटहृदये अभिप्रायो तन्मे उपस्थपेसि यदि इच्छसि मे जीवन्तीं ॥ सो नां पुनःपुनो संज्ञपयति ॥ प्रसीदाहि भद्रे कुतो इह उदकमध्ये मर्कटो ॥ सा दानि ॥ यो सो तव समुद्रकूले मर्कटो वयस्यो स्य वयस्यस्य हृदयं आनेहि ॥ सो आह ॥ प्रसादं करोहि सो मर्कटो मम वयस्यो च मित्रो च कथं अहं शक्यामि तस्य हृदयमुत्पाटयितुं ॥ सा दानि आह ॥ यदि न शक्नोसि मम मर्कटहृदयमुपस्थपयितुं नास्ति मे जीवितं ॥ सो दानि शुशुमारो ताये शुशुमारीये सुष्टु उपगृहीतो समानो आह ॥ अहं जलचरो सो च मर्कटो स्थलचरो च वनचरो च यत्र चरति तत्र मम अगति । तत्कथं अहं शक्यामि तस्य मर्कटस्य हृदयमानयितुं ॥ यथोक्तं पण्डितेहि ॥

शतं माया क्षत्रियाणां ब्राह्मणानां दुवे शते ।
सहस्रं माया राजानां स्त्रीणां माया अनन्तिका इति ॥

1[1]. C °ni çiçumâ° B °shi yâ°. — 1[2]. C yâvat so vâ° B yâca so vânaro ji° BC °svâmim̃ ta° B °rddham̃ ‖ âlopeṇa âçishyati | . — 3. C °ram̃ âlâpemi te ° shyasi | . — 4[1]. C °ni çiçumâ°. — 4[2]. B so tam̃ çuçumâ° C so tam̃ çiçumâram̃ pṛi°. — 5. C °dre kim̃ kṛi° BC °kṛitam̃ kin te duḥkham̃ ti kin te abhi(B °asi)pretam̃ âhagami kin ti de ° ṇayehi ‖ .

6[2]. C °ṭahṛidasya yasya me° BC °dophalo ya°. — 7[1]. B yati ma° BC °dayam̃ labhâmi | e°. — 7[2]. C so tâm âha ‖ . — 8. C pramâdam̃ ka° B °kuṭo i° C °di anyesmim̃ abhi° B °bhiprâ jalacareshu usthamemi | C °careshu yo upasthâpesi | . — 9[1]. BC so dâ° B °ha na me a°. — 9[2]. C °tra abhiprâyo ma ° dayo me abhiprâyam̃ tam̃ me u° B °hṛidayo abhiprâyo ta ° vanti | C °vanti so°. — 10. C so tam̃ punaḥ punaḥ sam̃jñâpa° BC °yati pra°.

11[1]. BC °ṭo sâ dâ°. — 11[2]. BC ° ni yo so ta°. — 11[3]. B °mukûle ma° C °ṭo vayasya asya vayasyanâsya hṛi° B °syo sya vayasvasya hṛi°. — 12[2]. C pramâdam̃ ka° B °tro ca atham̃ aham̃ çakyam̃ ta° C °ham̃ çakyam̃ | tasya hṛidayasya hṛi°. — 14[1]. B so dâ°. — 14[2]. B °tum̃ ‖ nâ ° tam̃ so dâ°. — 15. C °ni çiçumâ° B °ye sushṭhu u ° no ‖ âha aham̃°.

16. C bhadre aham̃° B °stharacalo ca vanacaro carati ‖ tatra ma° C °nacaro va so carati ‖ tatra ma° BC °gati tat ka°. — 17[2]. BC °ṇḍiteti ça°. — 18. BC °mâyâ kshetriyâ° C °ṇânâm̃ ca dve çate | B °ṇânâm̃ dve çate | . — 19. BC sahasra mâyâ râ° C °jânâ strîmâyâ a° B °strî ca mâyâ anantikâ ‖ iti so°.

सा दानि तस्य शुशुमारस्य आह ॥ एते वानरा फलभक्षा फललोला तस्य वानरस्य जल्पाहि । वयस्य एत्थ समुद्रपारे नानावर्णानि वृक्षाणि नानाप्रकाराणि पुष्पफलपिण्डभारभरितानि आम्राणि जम्बूनि च पनसानि भव्यानि च पालेवतानि च क्षीरकाणि च तिन्दुकानि पिप्पलानि च । आगच्छ तत्र त्वां नेष्यं नानाप्रकाराणि फलानि परिभुंजिष्यसि । ततो यदा तव हस्तगतो भवेय ततो तं मारित्वा हृदयं आनेसि ॥ तेन दानि शुशुमारेण अभ्युपगतं ॥ आनेष्यन्तस्य मर्कटस्य हृदयं प्रीता भवाहि न भूयो उत्कण्ठं करोहि मा परितप्यासि ॥

सो दानि शुशुमारो तां भार्यां च आश्वासेत्वा तं प्रदेशं गतो यहिं सो वनषण्डे वानराधिपो प्रतिवसति ॥ सो दानि तेन वानराधिपेन शुशुमारो दृष्टो । सो दानि वानरो तं दृष्ट्वा शुशुमारं प्रतिमोदित्वा पृच्छति ॥ वयस्य किं दानि सुचिरेण आगतो अस्मा[182a]कमवलोकयितुं किं क्षेमं मा वा किंचित् शरीरपीडा आसि ॥ सो दानि आह ॥ वयस्य क्षेमं च न च किंचि शरीरपीडा आसि अपि मे समुद्रपारं गत्वा आगत्वा ॥ सो तं पृच्छति कीदृशं समुद्रपारं भवति ॥ शुशुमार आह ॥ वयस्य रमणीयं समुद्रपारं नानाप्रकारेहि वृक्षसहस्रेहि पुष्पफलोपेतेहि उपशोभितं आम्रेहि च जंबूहि च पनसेहि च भव्येहि च पालेवतेहि उपशोभितं मातुलुंगेहि तिन्दुकेहि च पियालेहि च मधुकेहि च क्षीरिकेहि च अन्येहि च फलजातीहि येषामिह प्रचारो नास्ति । यदि तव अभिप्रायो आगच्छ नानाप्रकाराणि फलानि परिभोक्तुं तहिं गम्यते ॥ तस्य दानि वानरस्य फलभुक्तस्य फललोलस्य नानाप्रकाराणि फलानि श्रुत्वा तहिं समुद्रपारे गमनबुद्धी उत्पन्ना ॥ सो दानि तं शुशुमारमाह ॥

1[1]. B iti so dâ° C so dâni tasya çiçumâ°. — 1[2]. B eteshâm narâ phalâbhakshâ phalalotvà ta° C etam̃ vânarâ phalabhuktâ phalalo° B °jalyâhi vaya°. — 2. B °phalapiṇḍibhâ° C °phalapiṇḍitabhâ° BC °mrâṇi jam̃buni ca pa° C °panamâṇi bhavyâni ca bharitâni ca pâle ° rakâni tindukâni pipalâ° BC °lâni ca âga°. — 4. BC °ccha | tatra tan neshyam̃ (C °tam̃ nevyam̃) nâ°. — 5. C °veyam̃ tato°.

6[1]. C °ni çiçumâ° BC °tam̃ âne°. — 6[2]. C °vâhi mâ bhûye u ° pyâmi | . — 8. B sâ dâ° C °ni çiçumâ° BC °ro tam̃ bhâ° C °so vanakhaṇḍe vâ°. — 9[1]. B °peṇa çuçumâ° C °na çiçumâ° B °dṛishṭho | . — 9[2]. C °tam̃ çiçumâ° B °dṛishṭam̃ çuçumâ° BC °timeditvâ°. — 10. C °dânim acireṇa° B °ni sacireṇa â ° smâkam evam̃ loka° C °mam̃ mayâ kim̃ciç çarî°.

12[2]. BC °mam̃ ca me kim̃ci ça(C °cit ça)rira(C °re) pîḍâ âsi | api° C °âgatâ so tam̃°. — 13[2]. C çiçumâro âha ‖ . — 14. C °âmrâhi ca jam̃° B °pâlavate° C °piyâçâlehi ca madhukehi ca kshirikâhi ca anyâhi ca pha° B °kshirikâhi ca anye ° tîhi ca ye° BC °pracavâ nâsti | .

17. C °di tavâbhi ° râṇi paribho°. — 18. B °kârâni pha ° pâra gama° C °pâram̃ gamanabuddhir utpa°. — 19 C °tam̃ çiçumâ°.

स्थलचरो कथं शक्येया समुद्रपारं गन्तुं ॥ शुशुमारो आह ॥ अहं ते नेष्यामि मम इह ग्रीवायामारुह्य उपशेहि उभयेहि च हस्तेहि कर्करीय लग्नेहि ॥ सो दानि वानरो आह ॥ एवं भवतु गच्छामि यदि मनेसि ॥ सो दानि शुशुमारो आह ॥ ओतराहि अहं ते नेमि ॥ सो दानि वानरो उदुम्बरातो ओतरित्वा तस्य शुशुमारस्य ग्रीवायामारुह्य उभयेहि हस्तेहि कर्करीय लग्नो ॥ सो दानि शुशुमारो तं वानरं गृहीत्वा समुद्रं प्रतीर्णो नातिदूरे समुद्रस्य तं वानरं उदके चालेति ॥ सो तं वानरो आह ॥ वयस्य किं दानि मे उदके चालेसि ॥ सो नं आह ॥ वयस्य न जानासि कस्यार्थाय मया त्वमानीतो । तस्य मे वयस्यीये मर्कटहृदयस्य दोहलो । ततो मर्कटस्य हृदयस्यार्थाय त्वं मया आनीतो । सा मे वयस्य भार्या तव हृदयं खादिष्यति । एवं त्वं मया आनीतो ॥ सो दानि वानरो आह ॥ वयस्य मम हृदयो उदुम्बरे उत्कण्ठितो स्थपितो यथा लङ्कतरो समुद्रं तरेयं न च अतिभारो भवेयाति । तद्यदि ते अवश्यं मर्कटहृदयेन कार्यं ततो निवर्ताम ततो उदुम्बरातो तं मर्कटहृदयं ओतारियान दास्यामि ॥ तस्य दा[182b]नि मर्कटस्य यथाजल्पन्तस्य तेन शुशुमारेण पत्तीयितं ॥ सो दानि शुशुमारो तं गृह्णीय तहिं प्रतिनिवृत्तो क्षणान्तरेण तं वनखण्डप्रत्युद्देशमनुप्राप्तो ॥ ततो वानरो तस्य शुशुमारस्य ग्रीवातो उप्फारित्वा तं उदुम्बरं प्रक्रान्तो ॥ सो दानि शुशुमारो आह ॥ वयस्य ओतराहि एतं अतो उदुम्बरातो हृदयं गृह्णीय ॥ अथ खलु भिक्षवः सो वानरो तं शुशुमारं गाथाभिरध्यभाषे ॥

वड्डो च वृद्धो च होसि प्रज्ञा च ते न विद्यते ।
न तुवं बाल जानासि नास्ति अहृदयो क्वचि ॥

$1^{1}$. C stharacaro° BC °pâra ga°. — $1^{2}$. C çiçumâ°. — $1^{3}$. C °neshâmaḥ mama i ° paçobhehi ubha° B °paçohi ubha° BC °stehi kakari(C °ri)ya lagnehi ‖ . — $3^{1}$. C °cchâhi yadi manasi | . — $3^{2}$. C °ni çiçumâ°. — $4^{1}$. BC te tarâhi ahaṁ° B °haṁ te nesi ‖ . — $4^{2}$. C °tasya çiçumâ ° stehi kakariyehi lagnehi | B °stehi kakari°. — 5. C °ni çiçumâ ° rṇṇo nâbhidû ° sya taṁ vâvâna ° ke coleti | B °ke vâleti ‖ .

$7^{1}$. B °ke bâlesi | C °ke colesi | . — $7^{2}$. C so taṁ âha ‖ . — $7^{3}$. C °nîtaḥ B °nîto ta°. — 8. BC tasya te vaya° B °yasiye ma° BC °haro | . — $9^{1}$. B °nîto sâ°. — $9^{2}$. BC sâ te va° C °ryâ tevaṁ hṛi°. — $10^{1}$. C °vaṁ tvayâ â°. — $10^{3}$. B °mbaro utka° C °mbarâto utkarito stha ° thâ bahu ° yaṁ na panânibhâ° B °yaṁ na vanânibhâ° BC °ro tava yâti ‖ .

12. B °çyaṁ markaṭahṛidayaṁ nivarttâ° C °çyam markaṭahṛidayaṁ na kâ ° rttâmaḥ ta°. — 13. C °na çiçumâ°. — 14. C °ni çiçumâ° B °tinirvṛitto° BC °khaṇḍaṁ pra° C °prâptaṁ | . — 15. C °tasya çiçumâ ° to utphâri° B °to ushphâri° C °taṁ undubaraṁ praphânto | .

16. C °ni çiçumâ°. — $17^{1}$. C °râhi evaṁ ato undumba° BC °gṛihnîyaṁ ‖ . — $17^{2}$. C °kshavo so vânaro taṁ çiçumâ°. — 19. BC vaḍḍâ ca vṛindiprajñâ° B °jñâ ya te na vi° BC °te na°. — 20. B na tvaṁ bâ° C na tvaṁ vo na ca jânâsi | nâsti nâsti ahṛi° BC °dayo nâsti(B °sti | ) pra°.

प्रत्युत्पन्नेषु कार्येषु गुह्यमर्थं न प्रकाशयेत् ।
लभन्ति पण्डिता बुद्धिं जलमध्ये व वानरः ॥
अलमेतेहि आम्रेहि जंबूहि पनसेहि च ।
यानि पारे समुद्रस्य अयं पक्को उदुम्बरो ॥

भगवानाह ॥ स्यात्खलु भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन समुद्रतीरे वनषण्डनिवासी वानरो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं सो भिक्षवः तेन कालेन तेन समयेन समुद्रतीरे वनषण्डनिवासी वानरो अभूषि ॥ अन्यः स तेन कालेन तेन समयेन महासमुद्रे शुशुमारो अभूषि । (न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषो सो मारो पापीयां तेन कालेन तेन समयेन महासमुद्रे शुशुमारो अभूषि) ॥ तदाप्यहं एतस्य हस्तगतो वशगतो बुद्धिविशेषेण विषयातो अतिक्रान्तो एतरहिं पि एतस्य अहं मारस्य पापीमतो विषयातो अतिक्रान्तो ॥

समाप्तं मर्कटजातकं ॥

भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवन् कथमयं मारो पापीमां भगवतो तपोवने दुष्करचारिकां चरन्तस्य पृष्ठतो अनुबद्धो ओतारार्थी ओतारगवेषी अलभन्तो च ओतारं निर्विद्य प्रत्यवक्रान्तो ॥ भगवानाह ॥ न भिक्षवः एतरहिं एव एषो मारो पापीमां पृष्ठतो नुपृष्ठतो समनुबद्धो ओतारार्थी ओतारगवेषी अलभन्तो च ओतारं निर्विद्य प्रत्यवक्रान्तो ॥ भिक्षू भगवन्तमाहन्सुः ॥ अन्यदापि हि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनप[183a]दे शाकु-

2. BC °dhye ca vânaraḥ alam̃°. — 3. C °mrehi jambuhi pa°. — 4. C pâri pâre sa° mbarâ ‖. — 5[2]. C °kshavo yu° BC °vanakhaṇḍanivâsi vâ°.

6[1]. B °lvevam̃ tad evam̃°. — 6[2]. C °hetor aham̃°. — 7. BC °so tena kâ° C °re vanakhaṇḍe ni° B °nivâsi vâ° C °shi na khalvetad evam̃ drashṭavyam̃ | tat kasya hetor anyo° (l. 8). — 8. C anyo sas tena ° yena çiçumâ° B °mudro çuçuçumâ° BC °shi | tadâpya° (l. 10). — 10. C °pyaham̃m eta ° stagato vasagato bu ° him̃ pi etasyâham̃ mâ°.

13. C iti mahâvastune ma° kam̃ samâptam̃ ‖. — 14[1]. C bhikshur bha°. — 14[2]. C °shṭhato prishṭhataḥ a ° rârthi otâram̃ ga° B °rthî otâram̃ ga° B °bhanto co o° C °krânto ‖ bhi°.

16[2]. B °baddhâ otârârthi otârâgave°. — 18[1]. C bhikshu bha°. — 18[2]. C °gavan ‖. — 18[3]. C °gavâm̃ âha |. — 19. BC °kshavo bhû°. — 20. C °kshavaḥ ati ° ṇasîm̃ kâ° B °rthâye bâlayâso oḍḍinivâpo° C °pâçâ oḍḍito ni° BC °rṇṇo ta°.

न्तिकेन अरण्यायतने शकुन्तकानामर्थाये कालपाशा ओड्डिता निवापो प्रकीर्णो । ततः एकान्तं गत्वा तेषां पाशानां दर्शनपथे आसति ॥ तहिं च अपरो शकुन्तको पण्डितजातिको अरण्यायतने महान्तं शकुन्तकयूथं परिहरति ॥ तस्य शकुन्तस्य यूथपतिस्य बुद्धिविशेषेण तं शकुन्तकयूथं वर्धति न परिहीयति । स तेषां शकुन्तकानां परिरक्षति साकुन्तिकानामपि मूलातो चाण्डालकानामपि मूलातो मृगलुब्धकानामपि मूलातो विडालक्रोष्टुकानामपि मूलातो नकुलानामपि भंगकुलानामपि ॥ सो दानि साकुन्तिकेन विगतेन शकुन्तकयूथेन सार्धं तहिं अरण्यायतने विहरन्तो तहिं उद्देशे अनुप्राप्तो यत्र तेन शाकुन्तिकेन तानि कालपाशानि ओड्डितानि तं च निवापं प्रकीर्णं ॥ तेहि शकुन्तेहि तहिं उद्देशे चरमाणेहि तिलतण्डुलकोद्रवश्यामानां गन्धं घ्रायितं ॥ ते दानि तस्य निवापस्य तं गन्धं घ्रायित्वा इतः इतो निरीक्षन्तेहि दृष्टं तं निवापं तहिं पि उद्देशे सातं परिसमन्ते दृष्टं ॥ ते तं यूथपतिं शकुन्ता आमन्त्रयन्ति ॥ यूथपति अत्र उद्देशे तिलतण्डुलानि च कोद्रवश्यामाकानि गच्छाम परिभुंजाम ॥ सो शकुन्तो तेषां शकुन्तकानामाह ॥ मा गच्छिष्यथ अयं अरण्यायतनं न इह निवापं तण्डुलानां कोद्रवश्यामाकानां वा प्रवृत्ति अथ क्षेत्रेषु एतानि चान्यजातानि भवन्ति तेषां केषांचित् न अरण्यायतने । नूनं अत्र देशे शाकुन्तिकेहि शकुन्तानामर्थाय कालपाशो ओड्डितो निवापो च प्रकीर्णो मा अत्र अल्लीयिष्यथ । येन अहं चरामि उद्देशेन तेन तेनापि चरथ ॥ तेन साकुन्तिकेन तं महान्तं शकुन्तयूथं तहिं अरण्यायतने उपलक्षितो । ततो सो शाकुन्तिको दिवसे दिवसे अन्यमन्येहि प्रत्युद्देशेहि ॥ येहि प्रत्युद्देशेहि तेषां शकुन्तकानां गमनो प्रविचारो तेहि उद्देशेहि दिवसे दिवसे तानि कालपाशानि ओड्डि-

2[1]. C tato prakântam̃ ga° B °rçane pa° BC °âsanti | . — 3. C °buddhaviçe ° tham̃ vaddhati na° BC °yati sa te°. — 4. C °kshati | sâ çaku° BC °ntikân api mûlâto caṇḍâ° C °ṇḍârakânâm api mûlâto mṛigalubdhakonâm api mûlâto vi° BC °shṭukân api mûlâto nakulân api bham̃° C °bham̃geṇa ku° BC °kulân api || .

7. BC °dânini sa(C °ça)kuntakâna viga ° kîrṇṇam̃ tehi°. — 9. C °kuntakehi tahim udde ° çyâmakâni gacchâ° (l. 12). — 10. B °to niriksha ° ddeçe pi sâtam̃ pari ° shṭam̃ te tam̃°.

11. B °kuntakam âmantrayati | . — 12. B °patim̃ atra u ° drakaçyâmakâ° C °çyâmakâni gacchâmaḥ paribhum̃jâmaḥ so ça° B °jâma so ça°. — 13[1]. C °kuntakas teshâm̃°. — 13[2]. B °gacchashyatha° C °gacchatha ayam̃ a ° yatane ca iha° B °yatanâ ca iha° BC °çyâmakânâm̃ vâ pravṛitti atra kshe° B °etâni ajâtâ ° nti keshâm̃ ke° BC °cit || araṇyâyatane nû°.

16. C °nam̃ atra pradeçe ° vâpo prakîrṇṇam̃ mâtra marayishyanti | B °mâ putram alayishyatha | . — 17[1]. C yenâham̃ ca° B °ham̃ carami u° BC °ddeçe tena bhavesi caratha | . — 17[2]. C °sâkuntake° BC °çakuntakayûtham̃ ahim̃ a°. — 18. C tataḥ so° B °anye anyehi pra° C °tyudeçehi BC °çehi yehi°. — 19. C yehi teshâm̃° B °teshâ ça ° mano pavicâ° C °mano paricârantehi udeçe° C °tâni vâla° B °reti sama°.

तानि निवापानि च प्रकिरेति । समन्तेन च यूथपति शकुन्तो तेषां शकुन्तानां तेहि तेहि प्रत्युद्देशेहि ततो कालपाशेहि निवापा च वारेति ॥ एवं कालपाशो-[183b]कासा गच्छन्ति ॥

तस्य शाकुन्तिकस्य तत्र अरण्यायतने तस्य शकुन्तयूथस्य गोचरे शकुन्तानां निवापार्थाय खिद्यन्तस्य बुभुक्षाये पिपासाये पि सन्तप्तस्य एवं भवति । इदानि बन्धिष्यन्ति मुहूर्तं बन्धिष्यन्ति एते शकुन्ता एतेहि पाशेहि अल्लीयन्तीति ॥ ते नं शकुन्ता यूथपतिस्य पृष्ठतो तेषां कालपाशानां परिसामन्तेन चरन्ति तत्र निवापं पश्यन्ति न च निवापपाशभूमिं आक्रमन्ति सर्वकालं चरन्तो कालपाशेहि निवापातो च आत्मानं रक्षन्ति ॥ शाकुन्तिको पि एको ततो पश्यति तां शकुन्तकां तेषां कालपाशानां परिसामन्तेन चरन्ता एवं च तस्य भवति । एते अल्लीयन्ति विकालं एते बन्धिष्यन्ति इदानि बन्धिष्यन्ति मुहूर्तं बन्धिष्यन्ति ॥ एवं शाकुन्तिको तहिं अरण्यायतने तस्य शकुन्तयूथस्य गोचरातो दिवसे दिवसे बुभुक्षाये च पिपासाय च सन्तप्तो शुष्केन मुखेन स्फुटितेहि ओष्ठेहि शीतकालेन शीतेन दह्यन्तो उष्णकालेन उष्णेन पच्यन्तो वातातपेन दह्यन्तो खिज्जित्वा नित्यं विकालं क्षणितेन हस्तेन गृहं गच्छति हतो भवति ॥

स तु शकुन्तयूथं दृष्ट्वा अखिज्जन्तं नित्यं तस्य शकुन्तयूथस्य गोचरे आगत्वा कालपाशानि च ओड्डेति निवापानि च प्रकिरेति ॥ सो दानि ग्रीष्माणां पश्चिमे मासे तहिं अरण्यायतनं गत्वा तस्य शकुन्तयूथस्य गोचरे पुनः कालपाशे ओड्डित्वा

1. C °ntâkânâm̃ te° tyudeçe° B °nivâpo ca dhârehi | C °pâ ca dhâreti | . — 2. C °vam̃ kâlâ gacchanti. — 4. C °raṇyayatane tasya çakuntakayû° kuntakânâm̃ nivâpo'rthâyâ vidya° B °ntânâm̃ câvorthâ° BC °pipâçâye pi parantasya idâ°. — 5. BC °ni vadhishyati | muhûrtte(C °rtte pi) badhishyati ete ça'° çehiti alli° B °yanti | C °yanti me alliyanti | .

6. BC te tam̃ çakunta yû° C °yûtham̃pa ° risâmantena carati | tam̃ ca nivâpam̃° B risâmantena carati tacca nigavâpam̃° BC °nivâpapâçam̃ bhû° C °sarvâkâlam̃ ca | tato kâla° B °lam̃ caratobâlapâçe ° rakshati | . — 9. BC çâkuntako pi e° B °eko tâto paçya° C °eko tataḥ paçyati tâm̃ çâkuntakânâm̃ te° B °tâm̃ çâkuntikânâm̃ teshâm̃ bâlapâ° C °rantâ ca tasya° B °ntâ ca tasya°. — 10. C etâm̃ alliyanti te badhishyanti idânîm̃ badhishyat muhurttam̃ badhishyantîti || B etâ alliyanti | vikalam̃ ete bandhishyanti | idâ ° bûrttam̃ bandhishyantîti || .

11. B °ntiko ahim̃ aram̃ṇyâ° C °ne tasya yû° B °ntasya yû° BC °pipâçâya ca sam̃tapto çu° C °shkeṇa mu° BC °oshṭehi çîta° C °lena çîtehi na dahyanto | ushṇa° C °kshamikena hastena grihitam̃ gaccham̃ti | hatâ bhavanti so tam̃ çaku° B °cchanti hato bhavati sa te ça°. — 15. C so tam̃ çakuntakayûtham̃° B sa te çakum̃tayûtham̃° BC °jjanto nityam̃ tam̃ çakuntayûthasya° B °gocaranteṇa âga° C °gocareṇa âgatvâ bâla° B °tvâ bâlapâçoni ca ° kirenti | C °kiritvâ te dâ°.

16. BC te dâni gri° B °trâ tasya tasya ça ° care pupunaḥ° BC °naḥ bâlapâçe(C °ço) oḍḍita nivâpâ(C °pâçâ)ni ca prakîrṇṇâni(C °rṇṇâmi) bâlapâçâni oḍḍitvâ nivâpâ(C °pâni) ca prakiri° C °gatvâ bâlapâço darça° B °gatvâ kâlapâçe darça°.

निवापानि च प्रकिरित्वा एकान्तं गत्वा कालपाशदर्शनपथे आसति ॥ सो च शकुन्तो यूथपति शकुन्तयूथं परिहरन्तो तेन महन्तेन शकुन्तयूथेन सार्धं तेषां कालपाशानां निवापस्य च परिसमन्तेन चरति ॥ शकुन्तका भूयो तानि तिलतण्डुलानि पुनो पुनः पश्यन्ति दृष्ट्वा दृष्ट्वा तं यूथपतिं आपृच्छन्ति ॥ इमानि तिलतण्डुलानि चरेम ॥ यूथपति जल्पति ॥ मा अत्र अल्लीष्यथ कुतो इह अरण्यायतने तिलानां वा [184a] तण्डुलानां वा प्रवृद्धि क्षेत्रेहि व तिलानि भवन्ति केदारेहि न शालिव्रीहितण्डुलानि भवन्ति अन्यानि च धान्यजातानि । मा अल्लीष्यथ अपक्रमथ इमातो उद्देशातो ॥ सो पि दानि शाकुन्तिको पश्यति ॥ एवं चिरं कालं मम इह अरण्यायतने एतेषां शकुन्तानामर्थाये खिज्जन्तस्य कालपाशानि च ओड्डेन्तस्य निवापानि प्रकिरेन्तस्य अल्पस्मिं एतस्मिं अरण्यायतनोद्देशे एवं चिरकालं विस्तीर्णो यत्र मया कालपाशानि च ओड्डितानि निवापानि च प्रकीर्णा न च कदाचिदेते शकुन्तका अत्र कालपाशेषु अल्लीयन्ति निवापानि वा चरन्ति ॥ बहूनि वर्षाणि खिज्जन्तस्य शीतकाले शीतेन दह्यन्तस्य उष्णकाले उष्णेन पच्यन्तस्य वातातपेहि च हन्यन्तस्य बुभुक्षाये पिपासाये शुष्यन्तस्य मम न कदाचि एत्तकेहि वर्षेहि परिभ्रममाणस्य एवं महन्ततो शकुन्तयूथातो एको पि शकुन्तको हि हस्तमागतो ॥ को उपायो भवेया येनाहमेतां शकुन्तकान्तेहि कालपाशेहि बन्धेयं ॥ तस्य एतदभूषि ॥ यन्नूनाहं पत्रशाखेहि परिवेठित्वा एतं शकुन्तकयूथं येन एते कालपाशा तेन आकालेयं ॥

अथ खलु भिक्षवः सो शाकुन्तिको ग्रीष्माणां पश्चिमे मासे ग्रीष्मिकेहि वातात-

1. C °pati çakuntayûthena sâ° B °riharantaṁ tena ahante° C °sârddha te° BC °shâṁ bâlapâ° C °sya ca sama° B °caranti(?) saku°. — 3. B saku° C °ṇḍulâni vâ pravṛitti kshetre° (l. 6) B °no pupunaḥ°. — 4. B °rema yû°. — 5[1]. B °patiṁ jalpeti | . — 5[2]. B °tra allishya° B °ne tilâni vâ taṇḍulâni vâ pravṛitti kshe° BC °trehi ca tilâni caranti kedâ(C °nti | kedâ)rehi ca çâ° C °çâlihi vrîhitaṇḍulâni ca bha° BC °nti | anyâ ° jâtâni mâ a°.

7. C °llîyishya° BC °shyatha aprakra° C °imânito adarçâto so pi°. — 8[2]. C evaṁ cirakâlaṁ° C °ne eshâṁ çakuntakânâṁ arthâ° B °ntakânâṁm arthâ° BC °jjanta(C °ntita)sya bâlapâçâni ca odde° C °ḍdentasya nivâpâni ca prakirantasya alpesmiṁ imasmiṁ araṇyâyatane udde° B °cirakâraṁ vi° C °laṁ evaṁ vistî° BC °yâ bâlapâçâ° C °çâni ca prakîrṇṇo na ca kadâ° B °ntako atra° BC °tra bâlapâçashu allî ° ranti ba°.

12. C bahuni va° B °shṇakâle ushṇam na pa° C °çyantasya vâtotape° BC °pipâçâye çushkaṁ tasya° C °dâcid etta° BC °bhramamâṇo evam ahaṁ tato(C °taḥ) çakuntayû° C °ntakehi ha° BC °gato ko u°. — 15. C °ntakânâṁ tehi bâla° B °ntakânantehi bâla° BC °badheyaṁ tasya°.

16[1]. B °shi yan nû°. — 16[2]. BC °haṁ yatra° B °veḍhitvâ(*ou* °ṭhi°?) ° BC °yena ete bâlapâçaṁ(C °çâṁ) etena akâle(C °re)yaṁ ||. — 19. C °kshavo so çakuntako° C °pehi

पेहि सन्तप्यन्तो क्षुत्पिपासापरिगतो पक्षशाखेहि आत्मानं परिवेष्टयित्वा तं महान्तं यूथं येन ते कालपाशा तेन संपरिकालेति ॥ अथ खलु भिक्षवो ते शकुन्तका तं शाखान्तिकं वृक्षशाखेहि संपरिवेठितं अतिदूरेण परिसक्रन्तं दृष्ट्वा यूथपतिं आमन्त्रयेन्सुः ॥ यूथपति एष वृक्षो इमस्य शकुन्तयूथस्य बाहिरबाहिरेण गच्छति ॥ एवं स भिक्षवः यूथपति शकुन्तको तां शकुन्तां गाथाये अध्यभाषे ॥

दृष्टा मया वने वृक्षा अश्वकर्णा विभीतका ।
एवं च कर्णिकारा पि मुचिलिन्दा च केतका ॥
तिष्ठन्ति ते वने जाता अथायं गच्छते द्रुमो ।
नायं केवलको वृक्षो अस्ति तत्रैव किंचन ॥

अथ खलु भिक्षवः सो शाकुन्तिको ग्रीष्माणां पश्चिमे मासे ग्रीष्मिकेहि वातातपेहि संतप्तो खिन्नो भग्नो मथितो ताये वेलाये गाथामध्यभाषि ॥ [$184^b$]

पुराणतित्तिरिको यं भित्त्वा पंजरमागतो ।
कुशलो कालपाशानां क्रमापक्रमन्ति भाषति ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन तेषां शकुन्तकानां यूथपतिः परिकडूको पण्डितजातिको शकुन्तको अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं भिक्षवस्तेन कालेन तेन समयेन शकुन्तयूथपति परिकडूको पण्डितजातिको शकुन्तको अभूषि ॥ अन्यो सो शाकुन्तिको अभूषि । नैतदेवं द्रष्टव्यं । एष भिक्षवो मारो पापीमां तेन कालेन तेन समयेन

saṁtapya° B °pehi samapyanto | kshutpipâsapariga° BC °gato yatra° C °yûtha'ye ° rikîreti | B °rikîleti ||.

2. B °vo tena kuntakân taṁ çâkhâ° C °kuntakânâṁ çâkhântikaṁ vṛikshenâkhe ° vesthitaṁ | ati° B °veṭitaṁ a° C °ṇa parisaṁkrântaṁ dṛi° B °sakkântaṁ dṛi ° yetsuḥ yû°. — $4^1$. C °esho vṛi° B °thasya vâriravâhire°. — $4^2$. BC evan te bhi° C °vaḥ sa yû ° ntakâto tâṁ çakuntâ gâ°.

6. BC dṛishṭvâ ma° C °bhîtakî ||. — 7. B evâ ca ka° BC °rṇṇikâ ca muciliṁdâ ca ke° C °ketakî ||. — 8. C tishṭatiyaṁ vane° B °shṭhante vane° BC °cchata drumo |. — 9. C °vṛikshâ asti tatraṁva kiṁ° B °astyatraiva°. — 10. C °kshavo so çâ° B °vaḥ sa çâ° C °shmâyâṁ paççi°.

12. B purâṇettitarako punar ayaṁ° C °ṇattittarako punar ayaṁ° BC °bhitvâ paṁ° B °jalaṁ â° BC °ganto |. — 13. BC °lo bâlapâ° B °nâṁ krame apakramathanti bhâ° C °nâṁ kramopakramaṁti bhâ°. — $14^2$. C °lu bhikshavo yu° BC °rikaṭṭako pa ° shi nai°.

$16^3$. C °kshavo tena kâ° BC °thapati(C °tiḥ) kaṭṭako paṇḍi° B °shi a°. — $18^2$. B °kshava mâro pâpimâṁstena kâ° C °mâṁstena kâ° B °yena çakuntako a°.

शाकुन्तिको अभूषि ॥ तदापि एषो मम कालपाशानि च जालानि च निवापानि च ओड्डित्वा चिरं कालं पृष्ठिमेन पृष्ठिमं समनुबद्धो अवतारार्थी अवतारं गवेषी अलभन्तो च अवतारं निर्विद्य प्रत्यवक्रान्तो । एतरहिं पि एष मम षड्वर्षाणि तपोवने दुष्करं चरन्तस्य पृष्ठिमेन पृष्ठिमं समनुबद्धो अवतारार्थी अवतारगवेषी अलभन्तो अवतारं निर्विद्य प्रत्यवक्रान्तो ॥

समाप्तं शकुन्तकजातकं ॥

भिक्षू भगवन्तमाहन्सुः ॥ भगवता सुभाषितस्य अर्थाये मान्सशोणितं परित्यक्तं ॥ भगवानाह ॥ न भिक्षवो एतरहिं एव सुभाषितस्य अर्थाये मान्सशोणितं परित्यक्तं । अन्यदापि मये सुभाषितस्यार्थाये मान्सशोणितं परित्यक्तं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं अनुहिमवन्ते सुरूपो नाम हरिणो प्रतिवसति प्रासादिको रमणीयो मनोरमशरीरो रक्तेहि खुरेहि रक्तेहि शृंगेहि अंजितेहि अक्षीहि चित्रोपचित्रेण कायेन महान्तं मृगयूथं परिहरति पण्डितो बुद्धिमन्तो सुकुशलमूलपुण्यउपस्तब्धो ॥ तस्य मृगस्य पुण्योपचयेन तं सर्वं मृगयूथं सुखितं नानाप्रकाराणि भोजनानि चरमाणा शीतलानि च पानीयानि पिबमाना तहिं अनुहिमवन्ते प्रतिवसति अभीता अनुत्त्रस्ता न केनचित् शक्यं विहेठयितुं मनुष्येण वा व्याडमृगेन वा परित्रायकसंपन्ना [185a] ॥ शीतकाले उष्णप्रदेशेहि तं मृगयूथं परिकड्ढति उष्णकाले शीतेहि वनषण्डेहि तं मृगयूथं परिकड्ढति प्रियो देवानां नागानां यक्षाणां

1. BC °ma bâlapâçâ° BC °kâram̃ prishṭimena prishṭimam̃° C °mam̃ abaddho | avatârârthi avatâram̃ ga° B °veshi | ala° C °veshi alpabha°. — 3. C °esho ma° BC °sya prishṭimena prishṭimam̃° C °baddhaḥ avatârârthi avatâram̃ gaveshi abhalanto° B °târam̃ gaveshi ala°.

6. C iti çrîmahâvastuavadâne ça ° kam̃ samâptam̃ ‖ . — 7[1]. C bhikshu bha°. — 7[2]. B bhâshita bhaga°. — 8[2]. C °kshavaḥ etarahim̃ evam̃ su° B °rahim eva su ° çonitam̃°. — 9[1]. C °subhârthitasyârthâya mâ°. — 9[2]. C bhikshur bhagavantam âha°. — 10[3]. BC °vaḥ bhû°.

11. C °surupo nâ ° trehi kâye° B °riharati | paṇḍi° C °puṇyopasta° BC °bdho tasya°. — 14. BC °râṇi caramâṇâ(C °ṇo) çî° C °pâṇîyâni pibamânâ pi tahim̃° B °bamânâni tahim̃° BC °bhîtam anutrastâ° C °kenaci ça ° shyeṇa vâ cyâḍamṛigena vâ pari° BC °nnâ çîta°.

17. BC °rikaṭṭati° C °çitalehi tehi vanakhaṇḍehi tam̃° BC °rikaṭṭati° C °priyo ca devânâm̃ nâ° B °vanadevâṇâm̃ mṛi°.

किन्नराणां वनदेवानां मृगानां तथान्येषां पि भूतानां ॥ अथ खलु भिक्षवः शक्रो देवानामिन्द्रो तं मृगं जिज्ञासनार्थं लुब्धकवासमात्मानमभिनिर्मिणित्वा येन सो सुरूपो मृगराजा तेनोपसंक्रमित्वा तं मृगराजमाह ॥ मम सुभाषिता गाथा अस्ति यदि आत्ममान्सं परित्यजासि ततो गाथां श्रावयिष्यामि ॥ सो मृगराजा तस्य लुब्धकस्य वचनं श्रुत्वा प्रीतो संवृत्तो यदि चाहं इमेन विनाशधर्मेण सुभाषितं शृणोमि महतानुग्रहेण अनुग्रहीतो भवामि ॥ सो दानि मृगराजा तं मृगलुब्धकं आह ॥ परित्यजामि आत्ममान्सं सुभाषितस्य अर्थाये आवेहि मे सुभाषितं शीघ्रं अविघ्नेन ॥ शक्रो देवानामिन्द्रो मृगराजस्य ताये धर्मगौरवताये प्रीतो संवृत्तो ॥ सो तं आह ॥ वरं एवंरूपाणां एव सत्पुरुषाणां पादपान्सुरजो न सौवर्णो पर्वतो । सत्पुरुषाणां पादपान्सुरजो शोकहानाय संवर्तति सुवर्णपर्वतो पि शोकवृद्धिये संवर्तति । शक्रो देवानामिन्द्रो मृगराजस्य जिज्ञासनं कृत्वा तत्रैवान्तरहायि ॥

सुरूपं नाम हरिणं लुब्धको एतदब्रवीत् ।
अस्ति सुभाषितगाथा मान्सं देहि शृणोहि मे ॥
यदि विनाशधर्मेण मान्सेनाहं सुभाषितं ।
शृणोमि मान्सं ते देमि शीघ्रं ब्रूहि सुभाषितं ॥

लुब्धको आह ॥

सतां पादरजः श्रेयो न गिरि काञ्चनामयं ।
सो रजो शोकहानाय स गिरि शोकवर्धनः ॥

भगवानाह ॥ स्यात्खलु पुनः भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन अनुहिमवन्ते सुरूपो नाम मृगयूथपति परिकट्टको धार्मिको मृग अभूषि ।

1. C °devânâm̃m indro° B °gam̃ vijñâ° C °bdhakaveçam âtmâ ° na so surupo°. — 3. BC °to gâthâ çrâvayishyâmaḥ ‖ . — 4. BC °tvâ priyo sam̃° C °bhavâsi | .

7. C °jâmi tava âtmânam̃ sam̃subhâshyati tasya ca | arthâ ° tam̃ çrîghram avighnataḥ ça° B °ghnena ça°. — 8[1]. C °kro ca de°. — 9[1]. C varair evamrûpâṇâm̃ satpu° B varam̃ rûpâṇâm̃ evam̃ satpu° C °varṇṇam̃ pa°. — 9[2]. C °dapâm̃çurajo sokanâhâya samvartteti° B °jo sokahâṇâya sam̃vartteti° C °vṛiddhîye° BC °ye samvarttati | . — 10. C °râjajijñâsanâm̃ kṛi° B °sya vijñâ ° hâyi surû°.

12. C surupo nâ°. — 13. C °shitâ gâthâ mâtma de°. — 14. C °ṇa mâtsam̃ dehi çriṇohi me | yadi vinâçadharmeṇa mânse° B °shitam̃ çri°. — 15. C çriṇoni mânsa âtmânam̃ çi° B °mi | mânsam âtmâni çi° BC °ghram̃ kruhi°.

16. C lubdhâko â°. — 17. BC °yo na garî kâñcana°. — 18. B sa rajosokahâ°. — 19[2]. C °lu bhiksha ° syâd anyo sa tena kâ° BC °thapati(C °tiḥ) parikaṭṭako dhâ° C °mṛigo a°.

नैतद्देवं द्रष्टव्यं । तत्कस्य हेतोः । अहं सो भिक्षवः तेन कालेन तेन समयेन अन-हिमवन्ते मृगयूथपति परिकड्डको सुरूपो नाम धार्मिको मृगराजा अभूषि ॥ तदा मये सुभाषितस्यार्थाये मान्सशोणितं परित्यक्तं एतरहिं पि मये सुभाषितस्यार्थाये मान्सशोणितं परित्यक्तं ॥

सुरूपस्य मृगराज्ञो जातकं समाप्तं ॥ [185b]

एवं मया श्रुतं एकस्मिं समये भगवान्राजगृहे विहरति गृध्रकूटे पर्वते महता भिक्षुसंघेन सार्धं पंचहि भिक्षुशतेहि ॥ अथ खलु नन्दो च देवपुत्रो सुनन्दो च देवपुत्रो सुमनो च देवपुत्रो ईश्वरो च देवपुत्रो महेश्वरो च देवपुत्रो एते चान्ये च संबहुला शुद्धावासकायिका देवपुत्रा अभिक्रान्तवर्णा अतिक्रान्ताये रात्रीये केवलकल्पं गृध्रकूटं पर्वतं वर्णेनावभासयित्वा येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकमन्ते अस्थासि सगौरवा सप्रतीसा एकांशीकृता प्रांजलिकृता भगवन्तमेव नमस्यमाना ॥ एकान्तसंस्थितस्य नन्दस्य देवपुत्रस्य अयमेवरूपो चेतसो परिवितर्को उदपादि ॥ इमं अवलोकितं नाम व्याकरणं पुरिमकेहि तथागतेहि अर्हन्तेहि सम्यक्संबुद्धेहि भाषितं च भाषितपूर्वं च साधु भगवां पि एतरहिं भिक्षूणां भाषे ॥ भगवतो संमुखं प्रतिश्रुत्वा संमुखं प्रतिगृहीतं तथत्वाय धारयिष्यन्ति बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥ अधिवासेति भगवान्नन्दस्य देवपुत्रस्य तूष्णीभावेन अनुकम्पामुपादाय ॥ अथ खलु नन्दो च देवपुत्रो सुनन्दो च देवपुत्रो सुमनो च

1[3]. C °kshavo tena kâ ° nte surupo nâma mṛigayûthapati kaṭṭako dhârmiko mṛigo abhûshi | B °yûthapati kaṭṭako°. — 5. C iti çrîmahâvastuavadâne surupasya mṛi°.

6. B °çrutam̃m ekasmi sama ° kûte parvvate° C °gheṇa sârddham̃ pam̃câhi bhi° B °pam̃cabhi bhikshu°. — 7. C °lu nando ca devapu sunando ca devaputrotro suma° BC °sumato ca devaputro içva(C °isva)ro ca devaputro mahe° C °bahulâ ca çu° BC °trâ atikrântavarṇṇâ(B °rṇṇo) atikrântâ° BC °kevalam̃ kalpam̃° C °gṛidhakuṭam̃ pa ° rṇṇenâbhâ ° na bhagavâm̃s teno° C °kâm̃çîkṛitâḥ prâjalim̃kṛitâ bha ° mâno ekâ° B °mânâ e°.

12. C °cetasâ pari° B °di imam̃°. — 13. C idam̃ ava ° pûrva ca sâdhû bhagavân api eta° BC °him̃ pi bhi° C °bhikshuṇâm̃ bhâ° BC °she bha°. — 15. B °to mukham̃ pratiçrutvâ sam̃mukham̃ prati tatha° C °to sam̃mukham̃ satiçru ° hîtvâ tatha° BC °shyâṇâm̃ ca adhi°.

17. C °dhivâsateti | bhagavâ na° B °seti | bhagavâ na° C °tushṇabhâ°. — 18. BC °lu nandano devaputro sunandano ca devaputro sumato ca devaputro î(B °i)çvaro ca devaputro mahe° B °to tushṇî° C °tvâ bhagavato pâ° B °trishkṛitya pradakshikṛitvâ tatrai° C °ntarhâyetsuḥ ‖ B °yetsuḥ ‖ .

देवपुत्रो ईश्वरो च देवपुत्रो महेश्वरो च देवपुत्रो भगवतो तूष्णीभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिष्कृत्वो प्रदक्षिणीकृत्वा तत्रैवान्तरहायेन्सुः ॥

अथ खलु भगवांस्तस्यैव रात्र्या अत्ययेन येन संबहुला भिक्षवः तेनोपसंक्रमित्वा प्रज्ञप्त एवासने निषीदि ॥ निषद्य खलु भगवान् तां भिक्षूनामन्त्रयति ॥ दोषा भिक्षवः नन्दो च देवपुत्रो सुनन्दो च देवपुत्रो सुमनश्च देवपुत्रो ईश्वरो च देवपुत्रो महेश्वरो च देवपुत्रो अभिक्रान्तवर्णा अतिक्रान्तायां रात्र्यायां केवलकल्पं गृध्रकूटं पर्वतं वर्णेनावभासयित्वा येन तथागतस्तेनोपसं[186a]क्रमित्वा तथागतस्य पादौ शिरसा वन्दित्वा एकमन्ते अस्थासि सगौरवा सप्रतीशा एकांशीकृता तथागतमेव नमस्यमाना ॥ एकान्तस्थितस्य भिक्षवो नन्दस्य देवपुत्रस्य अयमेवरूपो चेतसो परिवितर्कों उदपासि ॥ अयं अवलोकितं नाम व्याकरणं पुरिमकेहि तथागतेहि अर्हन्तेहि सम्यक्संबुद्धेहि भाषितं च भाषितपूर्वं च ॥ अथ खलु भिक्षवः नन्दो च देवपुत्रो तथागतमेतदवोचत् ॥ अयं भगवन् अवलोकितं नाम व्याकरणं पुरिमकेहि तथागतेहि अर्हन्तेहि सम्यक्संबुद्धेहि भाषितं च भाषितपूर्वं च ॥ साधु भगवां पि एतरहिं भिक्षुणां भाषेया । भिक्षू भगवतः संमुखं श्रुत्वा तथत्वाय धारयिष्यन्ति । तं भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥ अधिवासेति भिक्षवः तथागतो नन्दस्य देवपुत्रस्य तूष्णीभावेनानुकम्पामुपादाय ॥ अथ खलु भिक्षवो नन्दो च देवपुत्रो सुनन्दो च देवपुत्रो सुमनो च देवपुत्रो ईश्वरो च देवपुत्रो महेश्वरो च देवपुत्रो तथागतस्य तूष्णीभावेनाधिवासनां विदित्वा हृष्टतुष्टा आत्तमना प्रमुदिता प्रीता सौम-

4. B °hulo bhi° C °nishidi nisha° B °shîdi nisha°. — 5. BC °dya | kha° C °bhikshuṇâm âma° B °bhikshuṇâma°. — 5². C °kshavo nando ca de ° ndo ca de ° mano ca devapuvaputro i° B °sunando ca devaputro sunando ca devaputro sumanaçca devapuvaputro i ° çvaro ca devaputro atikrântakarṇno atikrâ° C °heçvaro ca devaputro atiâkavarṇno atikrântâyâm̃ râtryâm̃ kevalam̃ kalpam̃° B °gṛidrakû° B °yenas tathâgatas te° C °pratisâ ekâm̃ ° thâgatam evam̃ na° B °gatam e nama° BC °mâno ekânta°. — 10. B °kshavâ na° ritarko u° C °tarkâ u°.

11. C °kita nâ ° ntehi sam̃mya°. — 12. BC °vaḥ nam̃do ca de° C °m etad uvâca ‖. — 13. BC °bhagavân ava° C °ntehi sam̃mya° B °tam̃ ca subhâ° C °tam̃ ca bhâshitam̃ pûrva ca sâdhu°. — 14. C °bhagavân iti ‖ e° B °gavam̃ pi e° BC °sheya bhi°. — 15. B bhikshu bha° C bhikshur bhagavato sam̃° BC °shyanti tam̃ bha°.

16. B °shyati | ba° BC °ṇâm̃ ca adhi°. — 17. C °kshavas tathâ° C °gata na° B °trasya bhûshṇi°. — 18. C °kshavaḥ na ° no ca devaputro içvaro ca de ° tro ma° B °no ca devaputro mahe ° sya bhûshṇi ° ditvâ cittâvashṭo âtta° C °ditvâ citto hṛishṭo âtta° B °muditapri° C °prîtisâmana ° nditvâ tathâgatem evam̃ ca tri° BC °shkṛittya pra ° hâyetsuḥ | ·

नस्यजाता तथागतस्य पादौ शिरसा वन्दित्वा तथागतमेव च त्रिष्कृत्वो प्रदक्षिणीकृत्वा तत्रैवान्तरहायेन्सुः ॥ तत्र ते भिक्षू भगवन्तमेतदवोचत् ॥ साधु भगवान् भिक्षूणामेतमर्थं भाषे भिक्षू भगवतः संमुखं श्रुत्वा प्रतिगृहीत्वा तथत्वाय धारयिष्यन्ति ॥ एवमुक्ते भगवान्तां भिक्षूनेतदवोचत् ॥ अवलोकितं भो भिक्षवो व्याकरणन्तं शृणोथ साधु भो शृणोथ मनसिकरोथ भाषिष्यामि च ॥ साधु भगवन् इति ते भिक्षू भगवतः प्रत्यश्रोषीत् ॥ भगवां सो तां एतदुवाच ॥

यदा भिक्षवो बोधिसत्वो अपारिमातो ती[186b]रातो पारिमं तीरं अभिविलोकेति अभिविलोकनापूर्वंगमेहि धर्मेहि समुदागच्छमानेहि ये पि ते महेशाख्या देवा ते पि तथागतमग्राये परमाये पूजाये पूजयन्ति अग्राय परमाय अपचिताय अपचायन्ति शुद्धावासा च देवा अष्टादश आमोदनीयां धर्मान्प्रतिलभन्ति ॥ कतमे अष्टादश ॥ पूर्वयोगसंपन्नो महाश्रमणो ति शुद्धावासा देवा आमोदनीयं धर्मं प्रतिलभन्ति । पूर्वोत्पादसंपन्नो ज्येष्ठतामनुप्राप्नुवन्तो च अनुत्तरं च लोके युगोत्पादसंपन्नो कल्याणोत्पादसंपन्नो अग्रोत्पादसंपन्नो ज्येष्ठोत्पादसंपन्नो श्रेष्ठोत्पादसंपन्नो प्रणिधिपूर्वोत्पादसंपन्नो निश्रयसंपन्नो उपधानसंपन्नो उपस्तम्भसंपन्नो संभारसंपन्नो अविपरीतधर्मं श्रमणो देशयिष्यति नैर्याणिकं लोकोत्तरं असाधारणं अव्यावध्ययशं गम्भीराभासं महाश्रमणो धर्मं देशयिष्यति सर्वाकारप्रतिपूरं सर्वाकारपरिशुद्धं इति शुद्धावासा देवा आमोदनीयं धर्मं प्रतिलभन्ति ॥ यद्भिक्षवो बोधिसत्वो अपारि-

2[1]. BC katamo bhikshavaḥ avalokito(C °kita) nâma vyâkaraṇo || evam ukte tân bhikshavaḥ bhagavantam etad avocat || bhagavanmûlakâ bhagavan dharmâ bhavanetrîyâ bhagavan bhavanti prabhâvâ bhagavatâ(C °to) evam uttari(C °rî)vaktavyâ bhagavato tûshṇîm̃(B °shṇim̃)bhâvenâdhivâsanam̃ vistareṇa karttavyam̃ | tatra° C °tra tehi bhikshur bhaga°. — 2[2]. C °n bhikshuṇâm etam artha bhâ° BC °she bhikshu sam̃mu° B °gṛihetvâ° C °hîtvâ tathatvâ tathatvâya dhâ°. — 4[1]. C °gavan tâm̃ bhikshum eta° B °bhikshun e°. — 4[2]. C °tam̃ câ bhi° B °tam̃ vo bhi ° ṇante çrota sâ° C °ṇante çroshyatha sâ° BC °dhovo çṛi°. — 5. B sâdhû bha° BC °gavân iti° C °ti || tehi bhikshur bha° B °bhikshu bha° C °vato pratyaçloshî bha°.

6. BC °gavân so tam̃ e(C °tas e°)tad u° B °vâca yadâ°. — 7. C °kshavaḥ bo ° tvo apâmâtro tirâ° B °mâto tîrârâto pâ° C °keti abhivilokanam̃ pû° B °cchamânehi | ye pi te maheçâkhye devâ pi ta° C °çâkhyo de° BC °pûjaye° B °jayanti | agrâ° C °grâye paramâye aparimitâye apacârayanti || çu ° yâm̃ dharmâm̃ pratilabhanti || yo bhikshavo bo° (l. 17). — 10. B °daça pû°.

11. B °sam̃pannâ ma ° ṇo ti | çu ° sâ devâ amo ° nti pû°. — 12. B °jyeshṭatâ ° pnuvanti ca anu ° gotpâdam̃ sam̃panno kalyâṇâtpâdasam̃panno agro° B °çreshṭotpâdasam̃panno pra ° mbhasampanno sam̃bhârasampanno aviparîtadharmma çrama ° shyati | nai ° vyâvadhyam̃ yaçam̃° B °shyati | sarvâkârapratipû ° çuddham̃m iti | çu ° vâ amodanîya dharmam̃ pratilabham̃ti yad bhi°. — 17. C yo bhiksha ° tvo apârimâtro pârimam̃° B °to

मातो पारिमं तीरं अभिविलोकेति अभिविलोकनापूर्वंगमेहि धर्मैहि समुदागच्छमानेहि ये पि ते महेशाख्या देवपुत्रा ते पि तथागतं अग्राये पूजाये पूजयन्ति अग्राये परमाये अपचिताये अपचायन्ति शुद्धावासा देवा इमानि अष्टादश आमोदनीयां धर्मा प्रतिलभन्ति ॥ अपि हि चेदं भिक्षवः सेन्द्रका देवा सब्रह्मका सप्रजापतिका महान्तं आमोदनीयं धर्मं प्रतिलभन्ति । यावज्जीवं च भिक्षवः बोधिसत्वा न च तावत्सर्वेण सर्वं कायिकेन स्थामेन समन्वागता भवन्ति न तावत्सर्वेण सर्वं वाचिकेन स्थामेन समन्वागता भवन्ति न तावत्सर्वेण सर्वं चेतसिकेन स्थामेन समन्वागता भवन्ति न तावद्भिक्षवो बोधिसत्वा सर्वगुणसमन्वागता भवन्ति नापि ताव भिक्षवः बोधिसत्वा पृथिवीप्रदेशं निश्राय गच्छन्ति वा तिष्ठन्ति निषीदन्ति वा यस्मिं भिक्षवः पृथिवीप्रदेशे बोधिसत्वा निषीदित्वा महान्तं यक्षं नि[187ª]हनन्ति महन्तीं च चमुं पराजिनन्ति महं च ओघं निस्तरन्ति अनुत्तरां च पुरुषदम्यसारथितामनुप्राप्नुवन्ति अनुत्तरां च लोकश्रेष्ठतामनुप्राप्नुवन्ति अनुत्तरां च स्वस्त्ययनतामनुप्राप्नुवन्ति अनुत्तरां च दक्षिणेयतामनुप्राप्नुवन्ति अनुत्तरां च सम्यक्संबोधिमनुप्राप्नुवन्ति यथाकारिततथावादितमनुप्राप्नुवन्ति अप्रतिसमतां च अनुप्राप्नुवन्ति असममधुरतां च अनुप्राप्नुवन्ति अप्रतिसमभागतां च अनुप्राप्नुवन्ति महन्तानां वर्णानामारम्बणमनुप्राप्नुवन्ति भूतानां च वर्णानामारम्बनमनुप्राप्नुवन्ति महन्तानामुत्पादानां निदानमनुप्राप्नुवन्ति भूतानामुत्पादानां निदानमनुप्राप्नुवन्ति ओहितभारतां च अनुप्राप्नुवन्ति कृतकार्यतां च अनुप्राप्नुवन्ति पृथिवीसमचित्ततां च अनुप्राप्नुवन्ति आपस-

mârimam̃° C °lokanâyapûrvam̃° B °nehi | ye ° çâkhyo de° C °çâkhyehi devaputro te° B °jayanti | agrâ ° câyati | çu° C °câyati çu° BC °shṭâdaçâ amodanîyam̃ dharma pra(C °rmân pra)tila°.

4. B °labhati yâ°. — 5. C þâvata ca bhi° B °jjîvacca bhi ° dhisatvena ca tâvat sa° C °dhisatvo na ca tâvat sa ° yikena sthâmena samanvâgatâ bhavati | na tâvat sa° B °bhavanti na tâye sarveṇa sarvam̃ vâci° BC °vanti | na tâ° C °sarve cetasi° BC °vanti | na tâ° C °kshavaḥ bodhi ° nvâgato bhavanti | nâpi tâvad bhikshavo bodhisatvo pṛi° B °gacchati | va tishṭhanti nishidati vâ ya° C °cchanti ca tishṭhanti nimidati ca | ya ° kshavo pṛi° BC °satvo nishi ° ksham̃ niharanti(C °nti | ) mahantîm̃(C °hatîm̃) ca camum̃ parâ° B °jinam̃ti | maham̃° C °nanti mahati ca o ° myaçârathi° BC °pnuvanti | anu° (*les deux mss. mettent le signe* | *après* anuprâpnuvanti *toutes les fois que ce mot se répète dans la suite de la phrase, à moins que le contraire ne soit noté*) BC °lokeçre° B °çreshṭatâ ° ṇeyatam̃ anuprâpnuvanti | sa anu° BC °sa(C °sam̃)myaksam̃ ° kâritam̃ tathâ vâdi° C °vâditam anuprâpnuvanti | yathâ vâditam̃ tathâ kâritam̃ anuprâpnuvanti | apratisamatâm̃ cânuprâ° B °vâditam anuprâpnuvanti || apratisaratâm̃ ca a° BC °vanti | samamadhuratâm̃ ca a-(C °dhurâm̃ câ)nuprâ ° nti | mahâ(C °ha)ntânâm̃ varṇṇânâm̃m ârabaṇa(C °na)m anu ° nti | bhû ° rṇṇânâm̃m âra(C °la)mba ° vanti || mahâ (C ° | maha)ntânâm utpâdânâm̃(B °nâ) ni° B °bhâram̃tân̄ ca a° C °ratâm̃ cânuprâ ° yatâm̃ cânu ° vîsamacittatâm̃ cânu° B °nti | âya-

मचित्ततां च अनुप्राप्नुवन्ति तेजोसमचित्ततामनुप्राप्नुवन्ति वायुसमचित्ततां च अनुप्राप्नुवन्ति विडालत्रस्तसमचित्ततां च अनुप्राप्नुवन्ति काचिलिन्दिकमृदूपमचित्ततां च अनुप्राप्नुवन्ति इन्द्रकीलोपमचित्ततां च अनुप्राप्नुवन्ति इन्द्रियसंपदं च अनुप्राप्नुवन्ति बलसंपदं च अनुप्राप्नुवन्ति स्थामसंपदं चानुप्राप्नुवन्ति धनसंपदं च अनुप्राप्नुवन्ति शय्यासंपदं च अनुप्राप्नुवन्ति आत्मवृषभितां च कायवैशारद्यं च अनुप्राप्नुवन्ति वाचावैशारद्यं चित्तवैशारद्यं चानुप्राप्नुवन्ति पृथुवैशारद्यं चानुप्राप्नुवन्ति प्रज्ञासंपदं चानुप्राप्नुवन्ति सर्वकुशलधर्मवशिभावपारमितां चानुप्राप्नुवन्ति ॥ यतो च भिक्षवो बोधिसत्वा सर्वेण सर्वं कायिकेन स्थामेन समन्वागता भवन्ति वाचिकेन स्थामेन समन्वागता भवन्ति चेतसिकेन स्थामेन समन्वागता भवन्ति अथ खलु भिक्षवो बोधिसत्वा तं पृथिवीप्रदेशं निश्राय गच्छन्त्यपि यस्मिं पृथिवीप्रदेशे बोधिसत्वा नि[$187^{b}$]षीदित्वा महान्तं यक्षं निहनन्ति महतीं च चमुं पराजिनन्ति महान्तं च ओघं उत्तरन्ति अनुत्तरां च पुरुषदम्यसारथितां अनुप्राप्नुवन्ति अनुत्तरां लोकश्रेष्ठतां अनुप्राप्नुवन्ति अनुत्तरां च लोकज्येष्ठतामनुप्राप्नुवन्ति अनुत्तरां च लोकस्वस्त्ययनतामनुप्राप्नुवन्ति अनुत्तरां च दक्षिणेयतामनुप्राप्नुवन्ति अनुत्तरां च सम्यक्संबोधिमनुप्राप्नुवन्ति यथावादिततथाकारितमनुप्राप्नुवन्ति यथाकारिततथावादितमनुप्राप्नुवन्ति अप्रतिसमतां चानुप्राप्नुवन्ति असममधुरतां चानुप्राप्नुवन्ति अप्रतिसमभागतां चानुप्राप्नुवन्ति महन्तानां वर्णानां आरम्बणमनुप्राप्नुवन्ति भूतानां वर्णानां आरम्बणमनुप्राप्नुवन्ति महन्तानामुत्पादानां निदानमनुप्राप्नुवन्ति पृथिवी-

sama° C °âpâsamacittanâm̃ cânu° BC °tejâsamacittatâm a(C °ttanâm̃ câ)nu° B °vâyûsa° C °yusamacittanâm̃ cânu° C °viḍâlatrastasamacittanâm̃ cânu° B °kâcillindi° BC °mṛidupamacittatâm̃(C °ttanâm̃) ca a° C °lopamacittâm̃ ca anuprâpnuvanti | balasapadam̃ ca anuprâpnuvanti | indrîyasam̃padam̃ cânuprâpnuvanti || sthâ° B °indriyâsam̃ ° nti || sthâ° C °dhanasam̃padam̃ cânu ° dyasam̃padam̃ cânu° C °çaryyâsam̃° C °yyâsam̃padam̃ cânu° BC °shabhikâya(B °yam̃) vaiçâ° C °vâcâvaiçâradyam̃ cânuprâpnuvanti | cittavaiçâ° B °jñâsam̃padam̃ cânuprâpnuvanti sarva° C °rmavaçipâra° BC °mitâm̃ cânu°.

7. C °kshavaḥ bodhisatvo sarveṇa sarvakâyi° B °nvâgato bhavanti | vâcikena sthâmasam̃padam̃ ca samanvâgatâ bhavanti | ce° C °sikena samanvâ° B °samatvâgato bhavanti || || atha° C °satvo tam̃ pṛi ° ntyapi tishṭhantyapi yasmim̃ ° satyo ni ° ksham̃ niharati | mahatim̃ ca camum̃ sam̃parâ° B ° haranti | ca camum̃° BC °uttaranti | anu° C °shadam̃mya-sârathinâm̃ anuprâpnuvanti | anuttarâm̃ ca salvamâratâm̃ cânuprâpnuvanti | anu° (*après* anuprâpnuvanti *les deux manuscrits mettent toujours le signe* | ) BC °çreshṭatâm a° B °lokejye° BC °jyeshṭatâm a° B °styanayatâm anu° C °styayanam anu° B °ṇeyatâtâm anu° BC °râm̃ ca sam̃mya ° nti yathâvâditam̃(B °tam̃ tathâ)tathâkâ ° nti | yathâkâritam̃ tathâvâdi(B °tathâ kâri)tam anu° B °tisâratâm̃ cânu° C °dhuratâm̃ cânuprâpnuvanti | mahantânâm̃ varṇṇânâm̃ âlambananam a° B °bhâgam̃ cânu ° nti | mahatânâm̃ varṇṇâ° C °bhûtânâm̃ valânâm̃ âlambanam a° BC °mahatânâm utpâ ° visamacittânâm̃ cânu° BC °âpa-

समचित्ततां चानुप्राप्नुवन्ति आपसमचित्ततां चानुप्राप्नुवन्ति तेजोसमचित्ततां चानुप्राप्नुवन्ति वायुसमचित्ततां चानुप्राप्नुवन्ति चित्तारम्बणभूतानामुत्पादानां निदानमनुप्राप्नुवन्ति ओहितमारतां चानुप्राप्नुवन्ति कृतकार्यतां चानुप्राप्नुवन्ति विडालचस्तस्त्रोपमचित्ततां चानुप्राप्नुवन्ति काचिलिन्दिकमृदुसमचित्ततां चानुप्राप्नुवन्ति इन्द्रकीलोपमचित्ततां चानुप्राप्नुवन्ति इन्द्रियसंपदं चानुप्राप्नुवन्ति बलसंपदं च स्थामसंपदं च धनसंपदं च निषद्यसंपदं च शय्यासंपदं च आत्मवृषभितां च कायवैशारद्यं च वाचावैशारद्यं च चित्तवैशारद्यं च पृथुवैशारद्यं च प्रज्ञासंपदं च सर्वकुशलधर्मवशितापारमितां चानुप्राप्नुवन्ति ॥

षोडशांगसमन्वागतो भिक्षवः सो पृथिवीप्रदेशो भवति यस्मिं पृथिवीप्रदेशे बोधिसत्वा निषीदित्वा महान्तं यक्षं निहनन्ति etc..... सर्वकुशलधर्मवशितापारमितां चानुप्राप्नुवन्ति ॥ कतमेहि षोडशेहि ॥ संवर्तमाने खलु लोके सर्वप्रथमं पृथिवीप्रदेशो उद्दह्यति विवर्तमाने च पुनर्भिक्षवो लोके सर्वप्रथमं पृथिवीप्रदेशो संस्थिहति प्रणीतं चात्र मध्ये संस्थिहति । न खलु पुनर्भिक्षवः स पृथिवीप्रदेशो प्रत्यन्तिकेहि जनपदेहि संस्थिहति अथ खलु भिक्षवः स पृथिवीप्रदेशो अनुमज्झिमेहि जनपदेहि संस्थिहति । न खलु भिक्षवः स पृथिवीप्रदेशो म्लेच्छेहि जनपदेहि संस्थिहति अथ खलु भिक्षवः स पृथिवीप्रदेशो आर्यावर्तेहि जनपदेहि संस्थिहति ।

samacittânâm̃ cânu ° nti | tejosamacittânâm̃ câ(B °nâñcâ)nu ° nti | vâyusamacittânâm̃ cânuprâpnuvanti | ° B °ttâlambaṇa° C °cittânâm̃ vanabhûtânâm̃ cânuprâpnuvanti | o ° pnuvam̃nti | kṛitakârya ° trastrobhogapacitta° BC °kâcalindikamṛidusama(B °samacitta)-tâm̃ cânu° B °kîlopamacittâtâm̃ cânu ° ndriyasam̃padam̃ cânuprâpnuvanti bala° C °vṛi-shabhatâm̃ ca kâyavaiçâradyatâm̃ ca pṛithuvaiçâradyatâm̃ ca prajñâ° B °kâyavaiçâradyâm̃ ca vâ ° radyâm̃ ca ci ° radyâm̃ ca pṛi ° radyâm̃ ca prajñâ° BC °jñâsampadâm̃ ca sarvaku-çalavaçitâm̃ ca pârami°.

9. C °kshavo so pṛi° BC °vati | ya° C °smim̃ pṛithivipra° B °vîpraçe bo° C °deçe bo-dhisatvo nishî ° haranti | mahatim̃ ca camum̃° (*je ne relève pas ici les variantes des manuscrits dans cette répétition que, pour abréger, j'omets dans le texte; elles sont d'ailleurs sans intérêt*) B °kuçalamûladharmavaçitâm̃ ca pârami° C °dharmatâm̃ ca vaçipâramitâm̃ câ° B °pnuvanti | cayato ca bhikshavo bodhisatvo sarvvena sarvam̃ kâyikena sthâmena samanvâgatâ bhavanti vâcikena sthâmena samanvâgatâ bhavanti | cetasikena sthâmena samanvâgatâ bhavanti || kata°.

11[1]. B °daçehi sam̃°. — 11[2]. C samvarttamâ ° lu bhikshavo loke sa ° vipadeçe udda ° kshavaḥ loke sa° B °vo loke sarvam̃pratha° BC °deçe sam̃sthihati praṇi°. — 13. C °r bhikshavo sa pṛi ° deçe pratya ° sthiham̃ti || atha° B °sthiheti || atha° C °bhikshavo sa pṛi° B °thiprade° C °deçe anu ° sthihanti | . — 15. C °na khalu punar bhiksha° BC °deçe mlecchehi jânapa ° ti | atha° C °kshavo sa° BC °pṛithipradeço âryâ(C °ryyâ)varte(B °nte)hi jânapade°.

समश्च भिक्षवः स पृथिवीप्रदेशो भवति सुसंस्कृताविकृतो पाणितलजातो । अनोदके चित्रउत्पलपदुमकुमुदनलिनिसौगन्धिकानि जातानि भवन्ति । अभिज्ञातो च भिक्षवः सो पृथि[188b]वीप्रदेशो भवति । अभिलक्षितो च भिक्षवः सो पृथिवीप्रदेशो भवति । महेशाख्यसत्वसंसेवितो च भिक्षवः स पृथिवीप्रदेशो भवति । दुष्प्रधर्षो च भिक्षवः स पृथिवीप्रदेशो भवति । अपराजितो च भिक्षवः स पृथिवीप्रदेशो भवति । न खलु पुनर्भिक्षवः तस्मिं पृथिवीप्रदेशे कोचिदेव सत्वो अवतारं गच्छति यदिदं मारो वा मारकायिको वा । देवानामगृहीतो च भिक्षवः स पृथिवीप्रदेशो भवति । यदिदं सिंहासनन्ति पृथिवीमण्डले संख्यातो भवति भिक्षवः स पृथिवीप्रदेशो । वज्रोपमो च भिक्षवः स पृथिवीप्रदेशो भवति । चतुरंगुलमात्रा च भिक्षवः तत्र पृथिवीप्रदेशे तृणानि जातानि भवन्ति नीला मृदू मयूरग्रीवासन्निकाशा अभिलक्षणा कुण्डलावर्ताः । ये पि ते भिक्षवो राजानो चक्रवर्तिनो तं पृथिवीप्रदेशं अधिष्ठिहन्ति नान्यत्र चेतियार्थं ॥ एवं खलु भिक्षवः स पृथिवीप्रदेशो षोडशांगसमन्वागतो भवति यस्मिं पृथिवीप्रदेशे बोधिसत्वा निषीदित्वा महान्तं यक्षं निहनन्ति etc. . . . . सर्वकुशलधर्मवशिपारमितां चानुप्राप्नुवन्ति ॥

अथ खलु भिक्षवो बोधिसत्वो उरुविल्वाये दुष्करचारिकां चरित्वा सुजाताये ग्रामिकधीताये मधुपायसमादाय येन नदी नैरंजना तेनोपसंक्रमित्वा नदीये नैरंजनाये तीरे गात्राणि शीतलीकृत्वा सुजाताये ग्रामिकदुहितुः मधुपायसं भुंजित्वा

1[1]. C °kshavo sa pṛithipradeçe bhavati | asaskṛito pâ° B °vati | anatskṛitavitskṛito pâṇitalejâto | . — 1[2]. C anodakacitto utpa ° linisaugadhikâ°. — 2. C °kshavo so pṛi ° deçe bha°. — 3. B °kshitâ ca bhikshavas sa pṛi° C °vaḥ sa pṛi°. — 4[1]. C °çâkhyo satva ° kshavo sa pṛi° B °vaḥ pṛi° C °vati | aparâ°. — 4[2]. B dushyadha°. — 5. C °kshavo sa pṛithipra°.

6. C °kshavo tasmiṁ pṛi ° çe kâçcid eva° B °çe kâci ° târa gacchati | ya° C °târam adhigacchati | yam idaṁ mâ ° kâyikâ vâ B °yikoyikâ vâ | . — 7. C °deçe bha°. — 8. C yam idaṁ siṁ ° thimaṇḍale° B °thivîpradeço maṇḍa° C °khyâtâ bha° B °vati | sa bhi° BC °ço bhavati | . — 9[1]. B °pamâ ca bhi° C °kshavo sa pṛithipra°. — 9[2]. C °raṁgulpâtâ ca bhi° B °trâya bhi ° prade tṛiṇâ° C °deço tṛiṇâ° BC °nti | nilâ mṛidu mayû ° rttâḥ ye pi°.

11. C °thipradeçam adhishṭhihaṁti | nâ° B °nti | nâ° BC °yârthe || . — 12. C °kshavo sa pṛi ° deçe sho ° matvâgato° BC °bhavanti | yasmiṁ° C °kshaṁ niharati | mahântaṁ ca camuṁ° B °nihananti | mahâ° (*je laisse de côté les variantes du passage que je ne répète pas dans le texte; elles sont sans intérêt particulier*) BC °dharmavasi(C °ṇi)pâlamitâṁ cânu°. — 15. C °kshavaḥ bo° B °m âdâye ye° C °tîre grâtrâ ° hitur madhu ° yâṁ kaṁsapâtraṁ° B °yâṁ kansa° C °hiṁ evaṁ divâvihârâ kalpa ° netiye || B °bhate | netiye || .

नद्यां नैरंजनायां कान्सपात्रं प्रवाहित्वा तहिं एव दिवाविहारं कल्पयित्वा स्मृतिं प्रतिलभते नैतिये ॥

अथ खलु भिक्षवो बोधिसत्वो नागनन्दीकालसमये येन नदी नैरंजना तेनोपसंक्रमित्वा नदीये नैरंजनाये गात्राणि शीतलीकृत्वा येन बोधियष्टिस्तेनोपसंक्रमे ॥ अद्राक्षीद्भिक्षवो बोधिसत्वो महासत्वो न्तरा च बोधियष्टीये अन्तरा च नदीये स्वस्तिकं यावसिकं तृणराशिलंचकं ॥ अथ खलु भिक्षवः बोधिसत्वो येन स्वस्तिको यावसिकस्तेनोपसंक्रमित्वा स्वस्तिकं तृणानि अयाचि ॥ अदासि भिक्षवः स्वस्तिको बोधिसत्वस्य तृणानि ॥ अथ खलु भिक्षवो बोधिसत्वस्तृणमुष्टिमादाय येन बोधियष्टिस्तेनोपसंक्रमे न चाद्राक्षीत् मारो पापीयां गच्छन्तं । तदनन्तरं च भिक्षवो मारस्य पापीमतो स्मृति अभूषि । सो स्मृतिमनुस्मरन्तो अद्राक्षीद्बोधिसत्वं अभीतविक्रान्तं विक्रमन्तं । अदीनविक्रान्तं विक्रमन्तं । दुष्प्रधर्षविक्रान्तं विक्रमन्तं । नागविक्रान्तं विक्रमन्तं । सिंहविक्रान्तं विक्रमन्तं । ऋषभविक्रान्तं विक्रमन्तं । हंसविक्रान्तं विक्रमन्तं च अग्रोत्पादं ज्येष्ठोत्पादं श्रेष्ठोत्पादं युगोत्पादं प्रणिधिपूर्वोत्पादं । शत्रुमथनविक्रान्तं विक्रमन्तं । अपराजितविक्रान्तं विक्रमन्तं । आजानेयविक्रान्तं विक्रमन्तं । महापुरुषविक्रान्तं विक्रमन्तं । हितैषीअनन्तकारीकरणातायै महासंग्रामविजयाये अनुत्तरस्य अमृतस्य आहरणताये ॥ अथ खलु भिक्षवः बोधिसत्वं तं महाविक्रान्तं विक्रमन्तं पंच मोरशतानि बोधिसत्वं गच्छन्तं अभिप्रदक्षिणीकृत्वा अनुपरिवर्तेन्सुः । पंच शतपत्रशतानि बोधिसत्वं गच्छन्तं अभिप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सुः । पंच क्रौंचशतानि बोधिसत्वं गच्छन्तं अभिप्रदक्षि-

3. C °nâma nandikâlasamaye nadî nairamjanâs tenopa° B °nâma nadikâlasamayena nadî nai° C °dhiyastis teno° BC °krame adrâ°. — 5. C °kshavaḥ bodhisatvam̃ itarâ ca bodhiyashṭi antarâ ca nadî° BC °dîye yena nairam̃janâye(B °yâ) svastiko yâvasi(C °ṇi)ko triṇakâçilam̃bako ‖ .

6. BC °yâvaçikos teno°. — 7. C adrâkshid bhiksha°. — 8. C °kshavaḥ bodhisatvâs trimushṭi° B °s trimushṭi° C °pîmâm̃ ga°. — 9. BC °smṛitim̃ a° B °shi to smṛi° C °shi tam̃ smṛi°. — 10. C °kshit | bodhi° BC °tvam̃ atîtavikrâ°.

11[1]. C °mantam̃ | alînavikrântam̃ vikramantam̃ | . — 11[2]. B dushyadharmâvikrâ° C °mantam̃ | sim̃ha°. — 12[1]. B °krâmantam̃ vikra°. — 12[2]. C °mantam̃ | nâgavikrântam̃ vikramantam̃ | ṛi°. — 12[3]. B °kramam̃tam̃ ca a° C °mantam̃ | agrotpâdam̃ yugotpâdam̃ jyeshṭotpâdam̃ çreshṭotpâdam̃ praṇidhipûvotpâdam̃ | B °jyeshṭotpâdam̃ yugo°. — 14[1]. B °krâmantam̃ vikramantam̃ apa°. — 14[2]. B °krâmantam̃ vikrama°. — 14[3]. B °krâmantam̃ vikrama°. — 15[1]. C °krâmantam̃ vikrama°. — 15[2]. C °karaṇaçatâyaiḥ ma ° jayâyair anu ° haraṇatâyaiḥ ‖ .

16. BC °dhisatvo tam̃ ma° C °ṇikarontâ anuvarttayetsuḥ | pam̃ca jîva° B °varttetsuḥ pam̃°. — 18. B °cchantam̃ | abhi ° varttetsuḥ pam̃°. — 19. B °varttetsuḥ | .

णीकरोन्ता [189b] अनुवर्तैन्सुः । पंच जीवंजीवकशतानि बोधिसत्वं गच्छन्तमभिप्रदक्षिणीकरोन्ता अनुवर्तैन्सुः । पंच वकशतानि बोधिसत्वं गच्छन्तमभिप्रदक्षिणीकरोन्ता अनुवर्तैन्सुः । पंच पूर्णकुम्भशतानि बोधिसत्वं गच्छन्तमभिप्रदक्षिणीकरोन्ता अनुवर्तैन्सुः । पंच कुमारीशतानि बोधिसत्वं गच्छन्तमभिप्रदक्षिणीकरोन्ता अनुपरिवर्तैन्सुः ॥ अथ खलु भिक्षवो बोधिसत्वस्य एतद्भूषि ॥ यथा च इमे पूर्वोत्पादा यथा च पूर्वनिमित्ता अव्याहतामनुत्तरां सम्यक्संबोधिमभिसंबुधिष्यं ॥

अद्राक्षीद्भिक्षवः कालो नाम नागराजा बोधिसत्वं अभीतविक्रान्तं विक्रमन्तं दृष्ट्वा च पुनरेतदवोचत् ॥ एहि महाश्रमण येन महाश्रमण मार्गेण गच्छसि भगवां पि महाश्रमणो क्रकुच्छन्दो एतेन मार्गेण गतो सो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो । त्वं पि महाश्रमण एतेन मार्गेण गच्छ त्वं पि अद्य महाश्रमण अनुत्तरां सम्यक्संबोधिमभिसंबुध्यसि ॥ भगवां पि महाश्रमणो कोनाकमुनि एतेन मार्गेण गतो सो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो । महाश्रमण एतेन मार्गेण गच्छ त्वं पि अद्य महाश्रमण अनुत्तरां सम्यक्संबोधिमभिसंबुध्यिष्यसि ॥ भगवानपि महाश्रमणो काश्यपो एतेन मार्गेण गतो सो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो । त्वं पि महाश्रमण एतेन मार्गेण गच्छ अद्य त्वं पि महाश्रमण अनुत्तरां सम्यक्संबोधिमभिसंबोधिष्यसि ॥ एवमुक्ते भिक्षवः बोधिसत्वो कालं नागराजमेतदवोचत् ॥ एवमेतं काल एवमेतं नाग अद्य अहं अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यामि ॥

1. B °gacchaṁtam abhi° C °cchati abhi° B °kshiṇaṁkarorontâ° BC °varttetsuḥ | . — 2. BC paṁca vâça(C °sa)çatâni° C °nuparivarttetsuḥ B °rttetsuḥ | . — 3. C paṁca kuṁbhaça° B °pûllakuṁbbaça ° varttetsuḥ | atha kha° (l. 5) C °varttayetsuḥ | . — 4. C °kshiṇaṁ karontaṁ anuparivattensuḥ || . — 5[1]. C °kshavaḥ bodhisatvasyaitad a°. — 5[2]. BC °vyâhatam anu° C °râṁ saṁmya°.

7. BC °kshîd bhîksha° B °tvaṁ abhito(?) vikrântaṁ vikramaṁ dṛi° C °bhîtavikrântaṁ mahâvikrântaṁ vikramaṁ dṛi°. — 8. C ehi mahâçravaṇa mârge° B °yena mahâçramaṇargeṇa gaccha° C °bhagavân api mahâçravaṇo° B °teṇa mârge gato° C °sau anuttarâṁ samyaksaṁbuddho abhisaṁbuddha tvaṁ pi° B °ddho tvaṁ pi°. — 10. B °mahâçramaṇaḥ | ete° C °mahâçravaṇa a ° rgeṇa gacchâ | tvaṁ pi adya mahâçravaṇa anuttarâṁ saṁmya°.

11. C bhagavân api mahâçravaṇa ko° B °çramaṇa kânânâkamuni° BC °to sau anu° C °ttarâyâṁ sa°. — 12. C mahâçravaṇo ete ° çravaṇa anuttarâṁ saṁmya ° buddhishyasi || . — 13. C bhagavâṁ pi mahâçravaṇo° B °çramaṇâ pi kâçya° C °to sau anuttarâṁ saṁmyaksaṁbo ° ddho tvaṁ° B °ddho pi°. — 14. B pi ma° C °mahâçravaṇa e° B °maṇa eteṇa mâ° C °gacchâ | adya tvaṁ mahâçravaṇa anuttarâṁ saṁmya ° saṁbuddhishyasi || .

16[1]. C °kshavo bo ° laṁ nâma nâga°. — 16[2]. C evaṁm etaṁ kâlo evam etaṁ mahânâga° B °ttarâyâṁ sa° C °râṁ saṁmyaksaṁbuddham abhisaṁbuddhishyati || .

शीलेन परिशुद्धेन शुद्धावासां पि पश्यति ॥
ये तत्र परिनिर्वायि वारिसिक्तो यथानलो ।
ते पि तां भिक्षू पश्यन्ति शीलं रक्षित्व शोभनं ॥
शीले अशवलः सदा अभूषि
पुरिमभवेषु विशिष्टलक्षमाणः ।
तेन दशबलं उपेति शास्तुं
तस्य विरोचति कायो लक्षणेहि ॥
शीले सदा समाधौ अप्रमत्तस्य
चरति जिनः पुरिमा अनन्तकल्पां ।
तेन भवति लोकधर्मस्वामी
गगणगतो यथा सूर्यो रश्मिराजो ॥
एवं शीलं परिशुद्धमाचरित्वा
अपरिमितं तथा अनन्तकल्पं ।
सुगतो लंकृतः शोभते लक्षणेहि
मुखातो वाति गन्धं चन्दनस्य ॥
इमां गुणां सततं विपश्यमाना
जिनवरवर्णितं शीलं रक्षमाणाः ।
विहरथ पवने उदग्रचित्ता
मुनिवर पूजित येहि ते प्रणीता ॥
दृष्ट पुरिम बुद्ध सार्थवाहा
हतरजा सत्कृत पूजिता स्वयंभू ।

1. C çilena pa ° vâsâ pi pa°. — 2. B °thânaro | . — 3. te pi tam̃ bhi° C te pi tam̃ bhikshu pa ° lam̃ rakshanti çobhitam̃ | . — 4. BC çîlena aça° C °çavala sadâ abhûshi pûri° B °shu | vi° BC °çishṭhalakshamâṇaḥ(C °ṇo) te°.

6. C °balâ upenti çâ° B °balâm̃ upenti çâstum̃ | nishiviro ceti kâyuḥ la° C °stum̃ nidhi virocati | âyuḥ la° BC °ṇehi çi°. — 8. B çîlam̃ sadâ | tadâ samâdhau° C çîlam̃ sadâ samâ° B °naḥ | purimânanta° C °rimâm̃nanta° BC °kalpân tena bha°. — 10. B °bhava lo° B °svâmi | gagaṇa° C °mì gaṇa ° thâ sûryyaraçmirâjo | B °râjo abhû | .

12. BC °çuddham̃ cari° B °mitam̃ | ta° BC °thâgato ana° C °ntagalpam̃ | C °lpam̃ su°. — 14. B sugataç ca alam̃kṛitaḥ | ço° C °gato alam̃kṛitam̃ ço°.

16. C °satata vi ° mâno ji° B °mâṇo jinavaravarṇṇatâm̃ | çi° C °lam̃ rakshiyamâṇâḥ BC °ṇâḥ viha°. — 18. BC °ttâ | mu° B °hi tena na pra° C °hi tena nu pra° BC °praṇî-(C °ṇa)tâ kṛi°. — 20. BC kṛishṇabandhum̃ | puri° C °rthavâha hatara ° jito | sva° B °jitâ | sva° BC °svayambhu ccha°.

छन्दो जनितो बोधिये वराये
इमे गुणाः श्रुत्वा उदग्रा बोधिसत्वाः ॥

पुनरपरं भिक्षवो शीलपरिशुद्धः तथागतः समाधिपरिशुद्धः प्रज्ञापरिशुद्धः विमुक्तिपरिशुद्धः विमुक्तिज्ञानपरिशुद्धः क्षान्तिपरिशुद्धो भिक्षवः तथागतो सौरभ्यपरिशुद्धो पि भिक्षवः तथागतो मैत्रापरिशुद्धो भिक्षवः तथागतो करुणामुदितापरिशुद्धो पि भिक्षवो तथागतो ॥ एवं परिशुद्धस्य भिक्षो तथागतस्य यः सत्कारं कुर्यात् पुष्पमाल्यगन्धध्वजपताकाहि वाद्यअनुलेपनेहि न तस्य पुण्यस्य शक्यं पर्यन्तमधिगन्तुं । नापि सो पुण्यस्कन्धं अन्तरेण शक्यं क्षपणाय अन्यत्र त्रीहि यानेहि [218ᵃ] अन्यतरान्यतरेण यानेन यावन्न परिनिर्वाणं तस्य पर्यन्तः ॥ तत्कस्य हेतोः ॥ यथा एवं हि भिक्षो तथागतो अप्रमाणः सर्वेहि गुणेहि तथा एवं भिक्षो तथागते प्रतिष्ठापिता दक्षिणा अप्रमाणा अपर्यन्ता अचिन्तिया अतुलिया अमापिया अपरिमाणा अनभिलाप्या ॥ यश्च खलु पुनः भिक्षो तथागतमेतरहि तिष्ठन्तं यापयन्तं सत्करेया गुरुकरेया मानेय पूजेया पुष्पेहि गन्धेहि माल्येहि छत्रेहि ध्वजेहि पताकाहि वाद्येहि धूपेहि विलेपनेहि अन्नपानयानवस्त्रेहि यश्च परिनिर्वृतस्य सर्षपफलमात्रमपिधातुं सत्करेया इत्येतं समसमं ॥

अथ खलु भगवां ताये वेलाये इमां गाथामभाषीत् ॥

बोधाय चित्तं नामेत्वा हिताय सर्वप्राणिनां ।
यस्स्तूपं लोकनाथस्य करोति अभिप्रदक्षिणं ॥
स्मृतीमन्तो मतीमन्तो पुण्यवन्तो विशारदो ।
भोति सर्वत्र जातिषु चरन्तो बोधिचारिकां ॥

3. B °raṁ bhikshoḥ çi° C °raṁ bhiksho çilapariçuddho tathâgatasya samâdhi° B °thâgata samâdhi° C °kshântipariçuddhaḥ bhikshavo tathâgato sau° B °maitrâpi pari° C °muditâpariçuddho pi bhikshavaḥ ta° BC °thâgato evaṁ°.

6. B °ryât | pushpa° C °japatâhi vâdya° BC °kyaṁ paryyaṁto adhi°. — 8. B °ntareṇa anyaṁ kshapaṇâya | anyatra trihi yânehi° C °ntareṇa apayâya | anyatra gṛihî yânehi° B °râ anyatareṇa° C °ryyanto | . — 10. BC yathâ evaṁ hi bhikshoḥ ta(C °kshos ta)thâgato° C °mâṇa sarve° B °bhikshoḥ tathâgate° C °vaṁ bhikshos tathâgate° BC °pratishṭâpitâ° C °kshiṇâ apraryya° B °mâṇâ aparyyaṁtâ aci°.

12. BC yataç ca kha° C °kshavas tathâ ° rahiṁ ti° BC °chatrehi dhvajehi patâkâ(C °ke)hi vâdye ° nehi anupânayâ(B °nayâna)vastre° C °vṛitasya tathâgatasya sarsha ° traṁ adhidhâtuṁ°.

16. C °gavân tâye ve° B °bhâshita | C °bhâshi | . — 18. BC yastûpaṁ° C °karonti abhi°. — 19. C smṛitimanto mativanto pu°. — 20. B °rikâṁ de°.

देवनागान यक्षाणां राक्षसानां च पूजितो ।
भोति सर्वत्र जातीषु स्तूपं कृत्वा प्रदक्षिणं ॥
वर्जेति अक्षणां अष्टौ ये केचिद्देशिता मया ।
आरागेति क्षणं एकं बुद्धोत्पादं सुशोभनं ॥
वर्णरूपेण संपन्नो लक्षणेहि अलंकृतो ।
उपेतो वरवर्णेन अदीनमनमानसो ॥
आढ्यो महाधनो भोति पुण्यवन्तो अनीर्षुको ।
पश्चित्वा लोकप्रद्योतं सत्करोति पुनर्पुनः ॥
न सो मुह्यति धर्मेषु नैरात्म्यं दृष्ट्व शून्यतां ।
प्रसादं लभते क्षिप्रं धर्मेण सो च कोविदो ॥
श्रेष्ठिकुलेषु आढ्येषु स्फीतेतु चोपपद्यति ।
अतिदानपतिः शूरो मुक्तात्यागो अमत्सरी ॥
ये केचिज्जंबूद्वीपस्मिं विशिष्टा कुलशोभनाः ।
तत्र सो जायते वीरो हीनां च परिवर्जयेत् ॥
गृहपतिमहाशालो शिरितेजेन तेजितो ।
पूजितो भवति सर्वत्र स्तूपं कृत्वा प्रदक्षिणं ॥
ब्राह्मणमहाशालस्य प्रज्ञावन्तो बहुश्रुतो ।
क्षत्रियमहाशालस्य आढ्यो भोति महाधनो ॥
राजा पि धार्मिको भोति जंबूद्वीपस्मिं ईश्वरो ।
प्रशासति इमां च सर्वां मेदिनीं गिरिकुण्डलां ॥
चक्रवर्ती महर्द्धिकः सप्तरत्नान ईश्वरः ।

1. B devânâ° C °nâgâç ca ya°. — 2. C bhonti sa° B °sarvajâ°. — 3. C varjjeti ashṭhau ye ke° B °hshaṇâm ashṭhau ye ke°. — 4. C ârogyeti ksha°. — 5. B °alaṁto | C °laṁkṛitâḥ upe°.

6. B upetya balavarṇṇe° C °to balavarṇṇe°. — 7. C °anirshuko | . — 8. C paçcatva lo ° dyoto satka°. — 9. C °shu dṛishṭvâ nairâtmya çû° B °dṛishṭvâ çû°. — 10. C °rmeṇa ca ko° B °rmeṇa yathâ ca ko°.

11. BC çreshṭiku° C °sphîteshu ca papadyati | B °shu ca utpadyati | . — 12. C °pati çreshṭa mu° B °muktatyâ° C °go asatsarî | . — 13. C °çishṭho kulaçobhanâ | . — 15. C °patiḥ mahâçâla çi° B °çâlaṁ çi° C °jena tejitejito | .

16. C °ti savatraṁ kṛi ° kshiṇi | . — 17. C °çâlasya pra ° çrutâḥ | . — 18. BC kshetri°. — 19. BC °bhoti mahâdhano jaṁbû(C °jambu)dvî° C °dvipesmiṁ içvaratvaṁ pra° B °smiṁ | îçvaro pra°. — 20. C °ca sarvamediniṁ | girikandaraṁ cakra° B °niṁ | gi ° lâṁ cakra°.

21. C °vartti maharddhiko saptaratnam içvero mahyaṁ prati° B °ptaratnam îçvaraḥ | .

राज्ये प्रतिष्ठितो बुद्धं सत्करोति पुनर्पुनः ॥
च्युतश्च गच्छते स्वर्गं प्रसन्नो बुद्धशासने ।
शक्रो पि भोति देवेन्द्रो मेरुमूर्धनि ईश्वरो ॥
सुयामो भोति देवेन्द्रो भोति संतुषितो पि च ।
निर्मितो पि च देवेन्द्रो वशवर्ती [218b] च ईश्वरः ॥
ब्रह्मा पि ब्रह्मलोकस्मिं ईश्वरो भोति पण्डितो ।
सत्कृतो देवकोटीहि स्तूपं कृत्वा प्रदक्षिणं ॥
न शक्यं भाषणक्षपणं कल्पकोटिशतेहि पि ।
ये स्तूपं लोकनाथस्य करोन्ति अभिप्रदक्षिणं ॥
न जातु अन्धो काणो वा भोति कल्पान कोटिभिः ।
बोधाय चित्तं नामेत्वा यो वन्दे शास्तु चेतियं ॥
विशुद्धां लभते नेत्रां विशालां नीलशोभनां ।
चेतियं लोकनाथस्य कृत्वा अभिप्रदक्षिणं ॥
उपेतो बलवीर्येण न कौसीद्यं स गच्छति ।
अप्रमत्तो सदा भोति स्तूपं कृत्वा प्रदक्षिणं ॥
दृढवीर्यो दृढस्थामो धौरेयो दृढविक्रमो ।
कौशल्यं गच्छते क्षिप्रं स्तूपं कृत्वा प्रदक्षिणं ॥
अग्निविषेण शस्त्रेण न जातु कालं करोति च ।
कालं करोति पूर्णेन आयुःक्षीणेन पण्डितो ॥
विघुष्टो राजधानीषु राष्ट्रेषु निगमेषु च ।
रूपेण अर्थभोगेहि स्तूपं कृत्वा प्रदक्षिणं ॥
शुचिगात्रो शुचिवस्त्रः शुक्लधर्मप्रतिष्ठितो ।
ततो न सेवते कामां चरन्तो बोधिचारिकां ॥

1. C mahyaṁ prati ° buddho satvo rohita punaḥ punaḥ | . — 2. C ataç câpi gate svarga pra°. — 3. C çakro pi bhonti devendro bhonti saṁntushi° B °mûrddhni i°. — 4. C °shite pi ca | . — 5. C nirmitâ pi ca devendro vasavarttî ca içvaro | .

6. C °lokesmiṁ içva° B °bhonti pa°. — 8. BC °shaṇâ kshapaṇâ kalpa°. — 10. BC °bhonti ka° B °bhiḥ dṛidhavi° (l. 16).

11. C bodhoya ci ° stu ceṭiyaṁ | . — 12. C °netra vi°. — 13. C ceṭiyaṁ lo ° tvâ natvâ pradakshiṇâṁ | . — 14. C upetya varavîryyeṇa na kauçidya gacchati | . — 15. C °bhonti stû°.

16. B dṛidhavi° C °sthâmaḥ dhau° B °reya dṛidhavi°. — 18. C °streṇa na kâ° BC °laṁ kurvanti ca | . — 19. C kâlaṁ kurvanti purṇṇe° C °ṇena shaṇḍito | . — 22. B °gâtrâ çuciva° C °gâtro çucivastro çukla ° tisthito | . — 23. B °to nishevate kâ° C °to nishevite kâ°

पुष्पस्य मालां कृत्वान यः स्तूपे उपनिक्षिपे ।
चित्तं बोधाय नामेत्वा न सो जातु विहन्यति ॥
इतश्च्यवित्वा मृतो हि त्रायस्त्रिंशां स गच्छति ।
विमानं लभते क्षिप्रं विचित्रं रतनामयं ॥
कूटागारांश्च प्रासादां अप्सरोगणसेवितां ।
मालां स्तूपे दहित्वान त्रायस्त्रिंशेषु भुंजति ॥
अष्टांगवरसंपूर्णां सुवर्णवालुकसंस्तृतां ।
वैडूर्यस्फाटिकास्तीर्णां दिव्यां पुष्करिणीं लभे ॥
भुंजित्वा विभवां दिव्यां परिपूरेत्व पण्डितो ।
च्यवित्वा देवलोकातो मनुष्यो भोति भोगवां ॥
तेन च कुशलमूलेन आरागेति तथागतं ।
पूजेति द्विपदश्रेष्ठां अप्रमत्तो विचक्षणो ॥
न सो जज्यति रागेन नापि दोषेण हीयति ।
न जातु भोति संमूढः पूजेत्वा द्विपदोत्तमं ॥
अरक्तस्य अदुष्टस्य अमूढः संवृतेन्द्रियः ।
भोति सर्वत्र जातीषु पूजेत्वा लोकनायकं ॥
जातीकोटीसहस्राणि शतानि नयुतानि च ।
सत्कृतो भोति सर्वत्र मालां दत्त्वान चेतिये ॥
चक्रवर्ती अपि राजा शक्रो पि भोति ईश्वरः ।
ब्रह्मा पि ब्रह्मलोकस्मिं मालां दत्त्वान चेतिये ॥
पट्टदामं ददित्वान लोकनाथस्य चेतिये ।

1. C pushpavarṇṇasya mâlâm̃ kritvâ yaḥ stûpe uparikshipe | . — 3. B itaç cavitvâ mattehi trayastrim̃° C °tvâ nimantrehi trayastrim̃çâ sa ga°. — 5. C kûtâgârâç ca prâsâdân apsa° B °vitam̃ | . — 6. BC °na trayastrim̃°. — 7. B ashṭâṅgaja(?)lasam̃pûrṇṇam̃ suvarṇṇavârikasam̃stṛitâm̃ | C ashṭâṅgajalasam̃purṇṇâ vârisam̃siktasam̃stṛitâm̃ | . — 8. C °stirṇṇâ di° shkiraṇî labhe | B °puhkiriṇîm̃°. — 9. C °pûrṇṇetva paṇḍito | . — 10. C °nushyâ bhonti bhogavân | .

11. C °âroge°. — 12. C pûjenti dvipado çreshṭo sam̃pramatto° B °çreshṭâm̃ agramattâ vicakshaṇâ | C °kshaṇaḥ || . — 13. C na so hradati râgena napi do° B na so jayati râ°. — 15. B °dushṭhaç ca amû° ndriyam̃ | .

16. C °nâyakaḥ | . — 18. C sa saskṛito bho° BC °datvâna ce° C °cetiye | . — 19. C cakravarttir api râjâ çrakro° B °varttin api râ° ti içva° C °isvaraḥ | . — 20. C °lokesmim̃° BC °datvâna° C °cetiye | .

21. C °cetiye | .

सर्वे स्य अर्था वर्तन्ति ये दिव्या ये च मानुषाः ॥
हीनां च कुलां वर्जेति न स तत्रोपपद्यति ।
आढ्यश्च धनवां भोति जम्बूद्वीपस्मि ईश्वरो ॥
रूपेणाथ भोगेहि च वर्णेन अथ ऋद्धिया ।
विशिष्टो भोति सर्वत्र पूजां कृत्वा तथागते ॥
जातिस्मरश्च सो भोति न सो रागेन ह्रीयति ।
जानते दोषं कामानां ब्र[219ª]ह्मचर्यं समादिये ॥
रूपेहि अथ शब्देहि रसेहि अपराजितो ।
न करोति पापकं कर्म पूजेत्वा द्विपदोत्तमं ॥
गन्धेहि अथ स्पर्शेहि न जातु स च ह्रीयति ।
स्मृतिमां संप्रजानश्च भोति पूजेत्व नायकं ॥
न तस्य चौरा राजानो धनस्कन्धं परामृषे ।
अग्निर्वा अपस्करोति पूजां कृत्वा तथागते ॥
शोकं च शोकवैराग्यां न सो जातु निगच्छति ।
पट्टदामं ददित्वान पुष्पं च लोकनायके ॥
सर्वत्र भोति जातीषु अशोक अनुपद्रुतो ।
पूजेत्वा लोकप्रद्योतं चक्रवर्ती महर्द्धिको ॥
सुघट्टितहस्तपादो अंगशोभां निगच्छति ।
वर्णरूपेण संपन्नः पूजेत्वा लोकनायकं ॥
वर्जेति पापकं कर्म चरन्तो बोधिचारिकां ।
पश्यते द्विपदश्रेष्ठां ये लोकस्मिं सुदुर्लभा ॥

1. B sarvasyârthâ varttonti° C sarvâm̃ ca arthâ vattenti° BC °divye ye ca mâ°. — 2. C hiṇâ ca kulâm̃ ca varjjeti na sam̃ ta° B hînâm̃ ca kule varjetvâ na sa°. — 3. C aḍhyaç ca° B °ti jam̃budvî° C °ti jâm̃budvîpesmim̃ içvaraḥ | B °smi içvaro | . — 4. BC °gehi varṇṇenâtha riddhiyo(C °ye) | . — 5. C °gataḥ | .

6. C °râjâ na hri°. — 7. B °dosha kâ° C jânante doshakânâm̃ brahmacaryya samâdiçet | . — 10. C °jâtu na ca hri° B °jâtu sam̃ ca hrî°.

11. B °nâyakâm̃ | . — 12. B °caurâ râjono dhanaskandha parâ°. — 13. BC °vâ âpaskaro(C °ro vâ) pûjâm̃°. — 14. BC °ca çokaçailânyam̃(C °nyâm̃) na so°. — 15. C °dadatvâ ° nâyakam̃ | .

16. C °nupadrite | . — 17. C °dyoto cakra ° rddhikam̃ | . — 18. BC °ṭṭitâhasta° B °pâdâm̃ am̃gaçobham̃ ni° C °pâdâm̃ ca aṅga°. — 19. C °ṇa sampanno pû ° nâyam̃ | . — 20. C vajjetvâ pâ° B °rma carato bo°.

21. C paçyanto dvipadaçreshṭam̃ yam̃ lokesmim̃° B °padâm̃ çreshṭhâm̃ yalloka° C °dullabhâ | .

कल्पकोटीसहस्राणि शतानि नयुतानि च ।
भुंजित्वा सौख्यं सम्प्रज्ञो बुध्यते बोधिमुत्तमां ॥
मालाविहारं कृत्वान लोकनाथस्य धातुषु ।
अभेद्यपरिवारेण राजा भोति महर्द्धिको ॥
वर्जैति पापकां धर्मा ये आर्यैहि विवर्जिता ।
चरति कुशलां धर्मा ये बुद्धेहि प्रशंसिता ॥
प्रियश्च दयितो भोति सत्कृतश्च प्रशंसितो ।
देवानामथ नागानां ये च लोकस्मि पण्डिता ॥
महता परिवारेण शोभनेन महाबलो ।
पूजयति द्विपद्श्रेष्ठं संबुद्धमपराजितं ॥
यत्र सो जायते गेहे पुण्यतेजेन तेजितो ।
तं कुलं सत्कृतो भोति राष्ट्रेण निगमेन च ॥
मालाविहारं कृत्वाण चित्तं बोधाय नामये ।
तस्यैषा भोति संपत्ति या बुद्धेहि प्रशंसिता ॥
न सो कुब्जो च खंजो वा खलितो वा विचंक्रमो ।
अलंकृतो लक्षणेहि यत्र यत्रोपपद्यति ॥
दरिद्र सत्व पश्यित्वा धनेन अभिच्छादये ।
असंहरणीयश्च सो चरन्तो बोधिचारिकां ॥
इमां च वसुधां सर्वां ओशिरित्वा महामतिः ।
अदीनचित्तो सो भोति न सो जातु विषीदति ॥
पुत्रांश्च धीतरांश्चैव भार्यां कल्याणभद्रिकां ।
ओशिरित्वान सो याति यो बोधिमभिप्रस्थितो ॥
पूर्वालापी च सो भोति सुमुखश्च सुदर्शनः ।

1. C °çatâni ca nayu°. — 2. BC °saukhya sa°. — 3. C mâlyâvi°. — 4. BC abhedyam̃ pari° C °vârena çobha°. — 5. B °pâpakam̃ dha ° varjase | .
6. B ceti ku ° hi prasam̃çità | . — 7. B priyaç ca deyito bho°. — 9. C °çobhatena mahâbale | . — 10. C pûjenti dvi° B °jayanti dvipadam̃ çre° C °çreshtam̃ sam̃°.
12. BC °tkrito bho°. — 13. C mâlyâvi° B °vihâlam̃ kri° C °nâmate | . — 14. B tasyaishâm̃ bho° C tasyaishâm̃ bhonti sam̃pattim̃ yam̃ ca bu° B °tti yam̃ bu° C °ddhe praçam̃sitâh | . — 15. B na so bubjo° C °kubjena yam̃jam̃ vâ kha° BC °vicakramo | .
16. B °hi yatro yatropa° C °dyanti | . — 17. C °satvam̃ paçcitvâ°. — 19. BC imam̃ ca° B °sarve osari° C °osiri ° hâmati | B °hâmatih adi°. — 20. C °tu nishîdatu | .
21. C putrâm̃ ca dhîtarâm̃çcaivam̃ bhâ° B nadhitarâm̃ || . — 22. BC °tvâna so jâti yo bo°. — 23. BC °pî ca bho° C °mukhâ ca sudarçanâh | .

न सो हन्यति ईर्ष्याये न च मानेन कदा चन ॥
सो अनीर्षु सूरतश्चैव चान्तिये पारमिंगतो ।
हितैषी गुणसंपन्नो यो बोधिमभिप्रस्थितो ॥
रतनं सर्वलोकस्मिं उत्पादस्तस्य दुर्ल[219b]भो ।
अनिंदितो दक्षिणीयो यो बोधिमभिप्रस्थितो ॥
गगणे निमिषे शक्यं बालेन गणेतु तारकां ।
न तस्य गुणपर्यन्तं शक्यं वाचाय भाषितुं ॥
शक्यं सर्वेषां सत्वानां चियध्वचित्तं जानितुं ।
न तस्य गुणपर्यन्तं शक्यं वाचाय भाषितुं ॥
महासमुद्राश्चत्वारो बालेन सिकतां तथा ।
नागकोटीसहस्राणि न तस्य गुण भाषितुं ॥
ये रोमा सर्वसत्वानां गतिषु षड्सु ये जगे ।
गणेतु निमिषे शक्यं न तस्य गुण भाषितुं ॥
यच्चेयं वसुधा सर्वा आपस्कन्धे प्रतिष्ठिता ।
निर्मितुं शक्यते बालेन न तस्य गुण भाषितुं ॥
देवागारमुपादाय ये कल्पस्थायिजीविनो ।
ये अन्तान्तरेण वृत्ता ये च भूमि अनागता ॥
पुष्पा फलानि च शक्यं गणयितुं विजानता ।
न तस्य बुद्धपुत्रस्य गुणपर्यन्त भाषितुं ॥
भाषेयुस्तस्य शूरस्य वर्णमालां मनोरमां ।

1. C namo ba° B °nyati irshyâye na na mâ° C °rshyâ ca kadâ cid yena mànasaḥ | . — 2. C so aniya sura° B °rshu sura° C °gataḥ | . — 3. C °sampanná yo°. — 4. C °lokesmim u° B °tpâda tasyâ° C °dullabhoḥ | . — 5. C °kshiṇiye bo° B °kshiṇiyâ yo bo°.

6. B gagaṇesmiṁ nimittaṁ ça° C gagaṇesmiṁ nirmitaṁ çakyaṁ bale gagaṇetakaṁ | B °lena gaganottakaṁ | . — 7. BC °paryaṁtaḥ ça°. — 8. BC na ça° C °citta jâ°. — 9. B °ryantaḥ ça°. — 10. B °mudraç catvâra câlena sinikan tathâ | C °mudra catvâra vâleṇa gaganesituṁ.

12. BC °roma sarva° C °nâṁ shaḍabhiḥ gatishu jage gaṇe° B °shaḍebhi jage | . — 13. C gaṇetuṁ nirmita çakyaṁ° B °nimittaṁ na çakyaṁ çakyaṁ tasya°. — 14. C °vasudhâṁ sa° BC °sarve â° C °tisthitâ | . — 15. BC nimittaṁ ça° B °kyate çâlena° C °bâlaṁ na ta ° shitaṁ | .

16. C devyâgâ° B devânâgâm upâ° C °dâya dhyâyinâṁ kalpasthâyinâṁ | B °no dhyâyinâṁ | . — 17. C yenâṁtare vṛi° B ye akrântare vṛi° C °bhûmishu anâyako | . — 18. BC pushpaphalâṁç ca çakyante te(B °nte na te)shâṁ vi(C °shâṁ ca abhi)jânatâ(C °tâḥ) | . — 20. BC çatâni nayutânâṁ ca bhâshe° B °rasya | varṇṇa° C °rasya ca | varnna ° mâṁ ca na tasya guṇa bhâshituṁ | ye ta° B °mâṁ yas ta°.

न शक्यं बुद्धपुत्रस्य गुणपर्यन्त भाषितुं ॥
जातीशतसहस्राणि यः से करेय अप्रियं ।
देवा मनुष्यां वर्जैत्वा निरयस्तस्य गोचरः ॥
अन्धो अचक्षुको भोति दुःखितो अपरायणो ।
उत्पीडां बोधिसत्वानां यः करोति अविद्दसु ॥
च्युतो अवीचिं गच्छेया दारुणं भयभैरवं ।
महता आत्मभावेन दुःखां वेदेति वेदनां ॥
योजनआत्मभावेन भोति तत्रोपपद्यते ।
समन्तमण्डलाकीर्णो समन्तपरितापितो ॥
पंच शीर्षसहस्राणि आत्मभावे प्रतिष्ठिता ।
एकशीर्षे च जिह्वानां शता पंच अनूनका ॥
हलानां शत एकस्मिं जिह्वाये प्रतिपादिता ।
तं पाचेति महाघोरं पापकर्मस्य तत्फलं ॥
अवीचितश्च्यवित्वान तपनं च प्रतापनं ।
वेदेति तत्र दुर्मेधो पौराणं दुष्कृतं नरो ॥
उत्पीडां बुद्धपुत्राणां यः करोति अविद्दसु ।
न तस्य सुलभो जातु भेष्यते मानुषो भवः ॥
जातीशतसहस्राणि शतानि नयुतानि च ।
दुःखा वेदनां वेदयति ततोनिदानं पच्यति ॥
मञ्जाघासो विषो भोति अभिमर्दो भयानको ।

1. B yas tasya bu° C ye tasya bu° B °sya | guṇaparyam̃ta bhâ°. — 2. C devakoṭiçata° B koṭiçata° BC °srâṇi çatâni na sukareyâ | apriyam̃ apriya(B °yamano) devâ°. — 3. C devânâm̃ manu ° sya bhogetvâ gocarâdhya aca°. — 4. C °ḥkhito parâyaṇâḥ tasya guṇaparyyanta bhâshitum̃ | u°. — 5. BC utpâdâm̃ bo° B °ti acidriço | C °ti abhidriçâ | .

6. B °vici ga° BC °ccheyâ so dâru°. — 8. BC yojanâm̃ âtma°. — 9. BC °kîrṇṇâ devâ(C °vâḥ) sama° B °ritrâyitâ | C °tâpitâḥ | . — 10. B °srâ âtma âtmabhave° C °srâṇâm̃ âtmabhâve pratisthitâ | .

11. BC °çîrshâ ca ji° C °nûnako | . — 12. C phalâ ° smim̃ jihûyâ pra° B °jihvayâ pra° C ° ditaḥ | . — 13. B tam̃ pâpeti ma° C tam̃ pâteti ma°. — 14. C avicim̃ ca cyuvitvâ°. — 15. C °rmedhaḥ pau°.

16. BC °putrâm̃ yaḥ(C °ya) ka° B °ti abhiddaçûna | C °ti abhidarçano | . — 17. C tasya ca su° BC °surabho jâtum̃ bhe° B °te manu° C °nushâ bha°. — 19. C °ḥkhâm̃ vedanâm̃ vedetvâ tato° B °yanti tato° BC °nidrâni paçyati | . — 20. BC mam̃jûghosho visho bhoti alamarddo° C °yânako | .



IMPRIMERIE NATIONALE.

उत्पीडनं करित्वान बुद्धपुत्राण तायिनां ॥
क्षुधापिपासामधिगतो पापकर्मस्य तत्फलं ।
न सो भोजनं लब्ध्वान जातु तृप्तीय भुंजति ॥
ततो च्यवित्वा यमलोके महाद्रोणिषु खज्जति ।
न त्राणं लभते [220a] जातु कृत्वा उत्पीड भिक्षुणां ॥
ततो च्युतः कालगतो मानुषं लोकमागतो ।
जात्यन्धो भोति दुर्मेधो दुष्टचित्तो असंवृतो ॥
वाचा दुर्भाषिता भवति असत्या घोषपापिका ।
मनुष्येहि च्यवित्वान क्षिप्रं गच्छति दुर्गतिं ॥
कल्पकोटीसहस्रेहि न जातु बुद्धं पश्यति ।
उत्पीडां बुद्धपुत्राणां यः करोति असंवृतो ॥
वस्तुषु बुद्धपुत्राणां करोन्तो रक्ष धार्मिकां ।
वर्जेति दुर्गती सर्वां क्षिप्रं गच्छति स्वर्गतिं ॥
आढ्यो महाधनो भवति बलवन्तो विशारदो ।
स्मृतिप्रज्ञाय संपन्नो सुखितो भोत्यनुपद्रुतो ॥
यदा च लोकप्रद्योता भवन्ति परिनिर्वृता ।
पश्चित्वा बुद्धस्तूपानां सत्करोन्ति पुनर्पुनः ॥
को इमानीदृशा धर्मा श्रुत्वा बुद्धस्य भाषितां ।
प्रसादं बुद्धपुत्राणां न करेया पुनः पुनः ॥
यत्र बुद्धसहस्राणि शतानि नयुतानि च ।
यथा वालिका गंगाये एत्तकां कल्प सत्करे ॥
यत्र प्रलुज्जन्तं सद्धर्म लोकनाथेन दर्शितं ।

1. C °putreṇa tâyi° B °putrâça tàyinâm̃ | . — 2. C °pâsàdhi°. — 3. C °triptim̃ ya bhum̃°. — 4. C °yamate kshipram̃ kri°. — 5. C °tpîḍya bhi°.

6. C °cyuto kâ°. — 8. B °shito bha° C °vanti asatyâ yecapâ° B °tyâ yethapapikâ | . — 9. C °gacchanti du°. — 10. C °buddhama paçyati | .

11. BC utpîḍâ bu° B °ṇâm̃ ya karo°. — 12. B yastu ° roti pûjâm̃ dhâ° C °roti rakshâm̃ dharmikâm̃ | . — 13. C vrajeti durgatim̃ kshipram̃ sarvam̃ ga° B °tî satâm̃ kshi ° rgatim̃ | . — 14. B °ti varavanto°.

16. B °loke pra° BC °paranirmitâ(C °tâḥ) | . — 17. C °stûyabuddhânâm̃ sa°. — 18. BC kâ i° C °mân idṛiçân dharmâ çru° B °dharmam̃ çru° BC °shitam̃ | . — 19. C °kareryya punar punaḥ | . — 20. C °çatâni ca na°.

21. BC °vârika gam̃°. — 22. C ye ca pralujyanti saddharmo lo° B °jjati saddharmaḥ o° C °thena deçitâḥ | B °rçitaḥ e°.

एकरात्रिंदिवं चापि धारये पुण्यं विशिष्यति ॥
अहं च पूजितो भोति बुद्धज्ञाने प्रतिष्ठितः ।
ते पि च पूजिता बुद्धा धर्मं लुज्जन्ते धारिते ॥
प्रलुज्जमाने सद्धर्मे यो रक्षे शास्तु शासनं ।
कल्पकोटीसहस्रेहि न सो जातु विहन्यति ॥
कायेन सुखितो भोति न स रोगं च गच्छति ।
अमनापसहस्रेहि न जातु संहरीयति ॥
क्षान्तिये भोति संपन्नो सूरतः सखिलो मृदुः ।
मैत्रचित्तश्च सत्वेभ्यो रक्षित्वा शास्तु शासनं ॥
सुखितो प्रमुदितः प्रतिक्रोशं
प्रतिलभति पुरिमनिरोधदृष्टं ।
सर्वा जहति अक्षणां अशेषा
जिनवरधर्मं धारेत्वा लुज्जमानं ॥
कवचितो सदा भोति लक्षणेहि
यथा गगणं प्रतिपूरं तारकेहि ।
स मधुरवचनो मनोज्ञघोषो
जिनवरधर्मं धारेत्व लुज्जमानं ॥
हीनकुलविवर्जितो स भोति
सुखितं येषु न अस्ति सौमनस्यं ।
आढ्य सुखित भोति भोगवां च

1. C ekaṁ râtridi° BC °divasaṁ câ° C °dhârayet punya vi° B °raye idaṁ punyaṁ°. — 2. C °pûjaya bhosi bu° B °bhomi bu° C °shṭhitâ | . — 3. C °ca pujyate buddhâṁ dha° B °pûjito bu ° rmaṁ lujjanti dhâ° C °dharmaṁ lujyaṁti dhâ° BC °dhâritha | . — 4. C pralujyamâ° B pralujjamâne saddharme pralujjanti ca vâritha | pralujjamâne saddharme yâ rakshenâstu° C °rme yâ raksha çâstu°. — 5. C °so hanyati jâtu ca | .

6. C °khitâ bhonti na sa râgaṁ sa ga° B °gaṁ sa sa gacchati | . — 7. B amanopa°. — 8. B °nno suratah° C °nno surato sa°. — 9. C °citte ca satveshu ra ° stu nâsanaṁ | . — 10. C °taḥ pritiḥ kro° B °taḥ pratikoçaṁ pratilabheti | pu° C °labheti ca | pu ° rodhaṁ saṁdri° B °drishṭhaṁ sarvâṁ°.

12. C °kshaṇâ | açeshâṁ jinavare dharma° B °ṇâṁ | açe° C °lujyaṁ mâṁ kvacit | sadâ° B °naṁ kavici°. — 14. C kvacit | sadâ° B kavicitu | sadâ° C °bhoti ca laksha ° thâ pratigaganaṁ pure | manojña° B °pûratâ | rako hi sama°.

16. C manojñaghosho târako madhu ° nojinaḥ || jinava° B °sho | ji° C °lujyamânâṁ ni°. — 18. C °varjjitasya bhonti su° B °rjitâsya bhonti su° BC °khita ye°. — 20. C âḍhyo sukhita bhogavâṁ° BC °vâṁ aji° C °lujyamânaṁ | .

जिनवरधर्मं धारेत्व लुज्जमानं ॥
स्थामवर उपेति वीर्यवन्तो
विचरति सर्वां वसुन्धरां अदीनो ।
बुद्धशतसहस्र सत्करोति
जिनवरधर्मं धारेत्व लुज्जमानं ॥
स्मृतिमतिगतिवन्तो पुण्यवन्तो
परमसुसत्कृतु भोति नरामरेषु ।
वि[220b]दु परमप्रशस्त जंबुद्वीपे
जिनवरधर्मं धारेत्व लुज्जमानं ॥
परमसुअभिरूपदर्शनीयो
प्रिय भवति नरनारीणां मरूणां ।
सुरुचिर प्रशस्तु पुण्यवन्तो
जिनवरधर्मं धारेत्व लुज्जमानं ॥
कल्पशतसहस्रकोटी पूरां
गुणस्थाविर्यसंगतो अनन्तज्ञानी ।
नो च क्षपेय सर्व आनुशंसं
जिनवरशासनं लुज्जितं धरेत्वा ॥
येषामिमं पुरिमसूत्रं शास्ता
दशबलधारि प्रकाशि देवदेवो ।
तेषामिदं नराणां हर्षमप्रकम्प्यं
भविष्यति पश्चिमे काले वर्तमाने ॥
भाषेद्य जिनवरधर्मं निर्वृतानां

2. C °petya viryyava° B °petu virya° C °sarvavasum̃°. — 4. B °tkaronti ji° BC °rma dhare° C °tva pralujyamânam̃ | B °nam̃ smṛi°.

6. B °gatavanta pu° C °gadimanta pu ° tkṛita bho° BC °ti sa narâ° C °râsareshu. — 8. C viduḥ pa ° prasastam̃ jam̃° B °çastam̃ jam̃ ° retvâ lu° C °tva pralujyamânam̃ | . — 10. C °ma surûpa abhidarçanîyo priyo bha° BC °riṇâm̃ | maruṇâm̃ su°.

12. C °cira praçasta pu ° tva lujyamânam̃ | . — 14. B °tîpurâm̃ guṇastaviyasagato antajñâni no ca° C °ti puro guṇastaviya antajñânino ca°.

16. BC °kshapiya sa° C °nusam̃ço | ji° B °çam̃so ji °çâsaneshu jino dhareyo | C °çâsaneshu jinayo dharayo yeshâ°. — 18. BC °çi devadevam̃ | . — 20. C °shâm imam̃ nagarâṇâm̃° B °nagarâṇâm̃ harshaprataptam̃ bha° C °harshaprakam̃pya bha° BC °kâle varttante | .

22. BC °cca dharma jina ° ti gauraveçam̃(B °ça) | .

अज्ञाय तेषां धरयति गारवेण ।
दानं च देति अपरिमितचेतियेषु
पूजेति संघ भगवतो च गारवेण ॥
प्रलुज्जमाने जिनवरशासनस्मिं
धारेति शास्तु वरधर्मनेत्री ।
सो तं अकरित्वा शुभकर्मश्रेष्ठं
नोपचक्रमे शुभं कालकर्मं ॥
सर्वे च सत्वा सियु लोकनाथा
समन्तचक्षू हतरजनिष्क्लेशा ।
ते कल्पकोटीनयुतां सहस्रां
भाषेयु वर्णं जिनवरे पुष्पदिन्ने ॥
पापं च कर्मं विजहति सर्वकालं
श्रेष्ठं च धर्मं प्रकरि उदग्रचित्तो ।
चरित्वार्थं सुचिरं चारिकासु
सो बुद्धो लोके भवति अतुल्यो ॥
यः सार्षपेण सूक्ष्मतरं ग्रहेत्वा
धूपेय गन्धं भगवतो चेतियेषु ।
तस्यानुशंसां शृणोथ मे भाषमाणं
प्रसन्नचित्ता जहिय क्लेशां ॥
सो पुण्यवन्तो चरति दिशासु
अरोगप्राप्तो दृढव्रत अप्रमत्तो ।
विनेति लोकां चरयन्तो चारिकां
प्रियो मनापो भवति जनस्य ॥

2. C °cețiyeshu° B °gavàtva gàraveça | C °to tva gâraveçam̃ | . — 4. C pralujyamâ° çâsanesmim̃°.

6. C °tam̃ kari° BC °çreshțam̃ nopakrame çubhe kâ° B °kâlam̃ karmam̃ | . — 8. BC °siya lokanâtho samantacakshu ha°. — 10. BC °sheya va° dinnam̃ | .

12. C °çreshțam̃ ca dharmmam̃ pra°. — 14. BC caritvàrtham̃° C °buddha lo° vanti atuliyaḥ° B °tulo | .

16. C yaḥ sarvepeṇa sû° ram̃ gṛihitvà dhù°. — 18. B °nuçam̃sà çri° C °nusam̃çà çṛi° BC °mâṇà pra° B °ttâ tahiya° C °ttà tahim̃ yashkileçâm̃ | . — 20. BC °ṇyavam̃to cara° pràpto dṛi° B °tto vi°.

22. BC vineti çokàm̃ cara°.

राज्यं च प्राप्तो जिन सत्करोति
महानुभावो विदु चक्रवर्ती ।
सुवर्णवर्णो स्फुटो लक्षणेहि
मनोज्ञगन्धां लभते सर्वकालं ॥
तस्य दुःखं नास्ति दौर्मनस्यं
स भोगां हीनां वितरि चारिकासु ।
आढ्यस्च भोति धनवां प्रभूतभोगो
अशेषप्राप्तो विचरति सर्वलोके ॥
उपसंक्रमि बहुजनं पृच्छमानो
धर्मं विशिष्टं जिनशासनस्मिं ।
विनेति कांक्षां गिरां भाषमाणः
श्रुत्वा च धर्मं लभे सौमनस्यं ॥
न पापकर्मं करि हीनबुद्धिः
ज्ञानं तु ज्ञात्वा परमं विशिष्टो ।
करोति दिव्यं शुभप्रेमणीयं
शोधेति चक्षुं विधमति अन्धकारं ॥
न तीव्ररागो भवति न तीव्रदोषो
न तीव्रमोहो भवति मनुष्यलोके ।
चरन्त शुद्धं अशबलब्रह्मच[221a]र्यं
करोति अर्थं अपरिमितअनन्तं ॥
न कस्यचिद्भवति प्रदुष्टचित्तो
न भोगहानिर्भवते कदाचित् ।
न तस्य नीचो भवति जनस्य
धूपेत्व गन्धं जिनचेतियेषु ॥

1. BC râjye ca prâ° C °viduç cakravarttiḥ | . — 3. C suvarṇṇo sphuṭala° B °rṇṇavarṇṇâ sphuṭala° C °gandhâ la°. — 5. C na tasya° BC °ḥkhaṁ nâpi dau° B °syaṁ na bho(*ou* °bhe)garhînâṁ vitarauto câ° C °syaṁ na bhogahînâṁ vicari câri°.

7. BC °çca bhavati dha° B °bhûtabhâgo açe ° rvasoke | . — 9. BC °kramitva (B °tvaṁ) bahujana pṛicchamânâya dha° C °çishṭhaṁ jinaçâsanesmiṁ | .

11. C °kâṁkshâ gi ° mâṇâ çrutvâ ca dharma labhet sauma° B °saurmanasyaṁ | . — 13. B °ddhiḥ | jñânajñâtaṁ parne viçi° C °jñânânujñâtaṁ parame viçishṭaṁ karo°.

19. C °ronti artha° B °roti | artha° C °rimitântaṁ | .

21. B na tasya kaçcid bha ° dushṭhaci ° hânir bha° C °hâni bhavate°. — 23. BC °tasya niyo bha ° C °petya ga°.

विशुद्धचित्तो विमलो विधूतपापः
शान्तः प्रशान्तः परशमेनुपेतः ।
कल्पान कोटी नयुता शतां चरित्वा
बोधिं अतुल्यां स्पृशति अदीनचित्तो ॥
सत्वान कोटीनयुतां सहस्रां
मार्गे अशोके परमे स्थपेत्वा ।
वर्तेत्व चक्रं असदृशं सर्वलोके
निर्वायि पश्चा हतरजो निष्किलेशो ॥
पताकं दत्त्वा भगवतो चेतियेषु
जनयेत् छन्दं कथमस्मि बुद्ध लोके ।
सो पूजनीयो भवति जनस्य
चरन्तु श्रेष्ठो जिनचारिकाये ॥
विघुष्टशब्दो भवति विदु प्रशंस्यः
शुद्धं विशुद्धं लभे आत्मभावं ।
उच्चैक्षणीयो भवति जनस्य
देवान नागान गुरु पूजितश्च ॥
सुवर्णवर्णो सद आत्मभावो
लाभी च भोति शुभचीवराणां ।
कर्पासिकानामथ कम्बलानां
क्षोमदुकूलान च कौशिकानां ॥
ये जंबुद्वीपे कुलश्रेष्ठ भोन्ति
आढ्या महात्मा बहुधनस्वापतेया ।
तत्रैव तस्य भवतोपपत्ति

1. C °dhùto pâpaḥ çânto praçânto praçamamnupetaḥ | B °çametam anupetaḥ ka°. — 3. B kalpâṇa ko° C °çatà cari ° tulâm̃ spṛi°. — 5. C °koṭinayu ° srâm̃ ca mâgo açoke paramamârga çive sthite ca | sthavitvâ va° B °parame çive | sthapitvâ va°.

7. B varttatvam̃ cakram̃° C varttasva cakram̃ a ° rvâpi paççà ha ° jo kishkileço | . — 9. BC °datvâ bha ° to jàtîyeshu janayet | chanda(C °yeta cchandako) kathayasi buddhaloke | .

11. C °nasyasya cara° BC °çreshṭâm̃ ji°. — 13. C °ghushṭhaça ° ti viduḥ prasam̃ço suddham̃ vi° B °çam̃saḥ çuddham̃ vi° C °bhed âtma°. — 15. B uccikshaṇi° C uccaikshaṇî° B °devona nâgâ° C °gânâm̃ gu°.

19. C °tha kam̃barâṇâm̃ kshemam̃ du ° na ca kauçalânàm̃ | B °kauçakàrâṇâm̃ | .

21. C °kule çreshṭa bho° BC °âḍhyo ma ° dhanasàpade(C °te)yâ | . — 23. BC tato ca tasya° B °bhagavatopapatti° C °bhagavato tatopapattim̃ varjjeti hinâ kulenàpi daridrâ | .

वर्जेंति हीना कुला ये दरिद्रा ॥
येन तस्य क्वचिज्जनियति ईश्वरत्वं
प्रदुष्टचित्तो न भवति कश्चि सत्वो ।
पापं च कर्मं गरहति सो परेषां
विशुद्धशीलो भवति सदाप्रमत्तो
अमत्सरी भवति अनाग्रहीतः
सो मुक्तत्यागो भवति अशोकप्राप्तो ।
न जीविकार्थं जनयति सो परेषां
विघुष्टशब्दो भवति सदा प्रशस्तो ॥
पश्चित्व बुद्धं महासार्थवाहं
करोति पूजां सद हृष्टचित्तो ।
छत्रैः पताकैः ध्वजगन्धमाल्यैः
सदा चरन्तो अशबलब्रह्मचर्यं ॥
मनुष्यलोके गुरुकृत सत्कृतो च
देवेषु दिव्यं लभति विमानश्रेष्ठं ।
मनोज्ञवर्णं सुरुचिरदर्शनीयं
रजताभिच्छन्नं मणिस्फाटिकेहि ॥
[चिरं] सुमेरुमूर्ध्ने लभति ईश्वरत्वं
सर्वे स्य देवा अभिनत शिष्यभूता ।
धर्मेण तेषां जनयति सौमनस्यं
न जातु भोति परमप्रमत्तो ॥
ततो च्यवित्वा भविष्यति मनुष्यलोके
राजान श्रेष्ठो वरचक्रवर्ती ।
न तस्य पापं जनयति कश्चि सत्वः

2. C yena ya tasya° B °sya kaçcijja° BC °janayati içvaratve pra° B °çcit satvo | C °çcit sa satvo | . — 4. C °rmanam grabarati so pa ° ddhasatvo bha°.

6. C °rî bhavati anogrihito so mu ° vanti aço°. — 8. C °nayasi so pa ° bdo sadâpramatto | . — 10. C paçcitva bu ° tipûjâ siya hrishṭhacittoḥ | B °cittoḥ cha°.

12. C °patâkair dhvaja ° sadârccivanto aça°. — 14. C °gurusatkṛi° BC °çreshṭam | .

16. C °ciram da° BC °yam(B °yam | ) râjâbhi° B °hi ci°. — 18. C °merum mû ° te içva° B °tvam | sa° BC °sarvasya de° C °devâr abhi ° bhûtâḥ | . — 20. BC dharmena te° C °bhotu pa ° mattoḥ | .

22. C teshâm cya° B °ke | râ° C °râjâma çre° BC °çreshṭo vara° C °kravartti | B °rtti na ta°. — 24. C °pam janayeti ka° BC °kaçcit satvaḥ(C °tva) pri° C °nâpâ bha°.

प्रियो मनापो भवति जनस्य ॥
कल्पान कोटीनयुता सहस्रां
लभित्व सौख्यं सुचिरं मर्त्यलोके ।
गत्वान देशं पुरि[221b]मजिनान वुट्टं
सो बोधिं बुद्धे अजरमरामशोकां ॥
ध्वजं दहित्वा हतरजसत्वसारे
तं च प्रसूतं लभे नो चिरेण ।
प्रभूतकोशो भवति अनोपमप्रज्ञो
परिवार तस्य होति अदीनचित्तो ॥
लभित्व भोगां विभजति भुंजते च
न तस्य त्रासो भवति न दौर्मनस्यं ।
राजा सो तुष्टो वितरति ग्रामराष्ट्रं
न पापचित्तं जनयति तस्मिं जातु ॥
श्रेष्ठी विशिष्टो भवति प्रभूतकोशो
गृहपतिश्च रतनविचित्रितांगो ।
पुत्रो च राज्ञो अथ वा अमात्यो
राजा च भवति बलचक्रवर्ती ॥
वर्जैति सो हीनकुलानि सर्वान्
विशिष्टभोगं कुलरत्नं लभित्वा ।
सदाप्रमत्तो भवति अलीनचित्तो
वर्जैति कामां यथ मीढकुम्भं ॥

2. B kalpâṇa ko° C °koṭina° B °labhishya saukhyam̃ çuciram̃°. — 4. C gratvâna demi pu° B °deçî pu° BC °jinâ(B °no)na vastram̃ so bodhi bu° B °ramaromaṇokam̃ | C °ramanâpaçokâm̃ | .

6. C °daritvâ ha ° sâram̃ tam̃ ca° B °sâre tam̃ prabhû ° bhe ro cireṇa pra° C °labhante cireṇa | . — 8. B °ço bhavati | ano° C °ço bhavati anâpramatto sadâ prasasto parivâra tasyo | adînacitto lâbhi° B °tasyo bhavati adî ° tto la°. — 10. C lâbhi ° gâm̃ vibham̃jati bhogâm̃ vibhogatena | na tasya° B °bhum̃jate | na ta° C °vanti daurma° BC °syam̃ râ°.

12. C râjasya tu° BC °râshṭram̃ | na pâ° C °janayeti° BC °jâtu çre°. — 14. BC çreshṭo viçi° C °bhavanti | pra° B °pati ratanam̃ | vicitrimâm̃go putro° C °tiçca ratnam̃ vicitrâṅgaputro°.

16. C putro atha vâ amâtyo | râjâ bhavanti ba° BC °rttî va°. — 18. B varjeti | so hinakulâ sarvân aviçishṭhabhogâm̃ ku° C °rvân || viçishṭabhogam̃ kulaçreshṭaratnam̃ sadâ° B °tvâ sadâ°. — 20. C sadâ labhitvâpramatto bhavanti | varje° B °citto | varje° C °yathâ mi° BC °mbham̃ viçi°.

विशिष्टरूपं लभते वर्णांश्च
कुले च श्रेष्ठे भवतीश्वरश्च ।
परिवारस्तस्य भवति अभेद्यो
पुरस्कृतश्च भवति जनेन ॥
न चित्तशूलं जनयति सो परेषु
प्रसन्नचित्तो सदा अप्रमत्तो ।
न तस्य अपि क्रमते न शस्त्रं
उल्लोकनीयो सद पुण्यवन्तो ॥
प्रमादं सो न चरति पुण्यवन्तो
सुसंप्रजानो सद सो मनुष्यो ।
सुनिगृहीतो भवति मुक्तचित्तो
न तस्य. . . .धर्मस्य अन्तो ॥
सुतीक्ष्णगात्रो भवति विशिष्टो
सुविशुद्धचित्तो भगवां सत्यवादी ।
भयार्दितानां जने सौमनस्यं
त्राणं चरेय च परायणं च ॥
स वै करित्वा बहुकामनुष्यं
प्रतिष्ठिहित्वा महाज्ञानस्कन्धे ।
गच्छित्व मण्डं वरपादपेन्द्रं
बुद्धे अतुल्यो वरअग्रबोधिं ॥
हेष्टा उपादाय भवाग्रपूरं

1. B °çislịtharû° C °çishṭa labha° B °kshanâcca ku° C °kshaṇâccâkule° BC °le çakyeshṭe | (B °shṭo) bhava ° çca pari°. — 3. BC °vâra tasyo bhavatì abhe° C °bhedyâ | pu° BC °çca bhavatì ja°. — 5. B °citto | sadâ° C °citto madâ a° BC ° matto na ta°.

7. C °te na çakyam̃ u ° niyam̃ sadâ pu° B °sadâ pu ° nto susam̃pra°. — 9. C pramâdamâno carati susam̃prajâno sa puṇyavanto pramâdam̃ mâno carati susam̃prajâto | sa puṇyavanto sadâ so manu° B °jâto | sadâ so ma° BC °shyo suni°.

11. B °ktacisya dharmasya anto | C °ktacittasya dhanasya anto | . — 13. C sucaukshâgâtrâ asadhiçishṭo suvi° B sutîkshagâtrâ bhavati asam̃viçishṭo çuvisuddhacitto sa bhaga° C °tto sa bhavati satya° B °vâdi | . — 15. C °janai sau° B °trâṇam̃ caleyam̃ ca pa° C °trâṇam̃ caraṇa ca parâyaṇa ca | .

17. B sarve kari° C sarve cari° B °kâmanasya paristhitvâ mahâ° C °manusya paristhipitvâ mahajñâneskam̃dhe | B °skandho gacchi°. — 19. C acchidra maṇḍam̃° B °tva shaṇḍam̃ varapâdavendram̃° C °tulyam̃ varaa°.

21. BC °jâmbuna ° tram̃ ça°.

जाम्बूनदस्य इमं बुद्धक्षेत्रं ।
शक्यं क्षपेतु शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
न तस्य कायो भवति विवर्णो
दृढे स पीठे.....अच्छति ।
आलोकप्राप्तो चरे सर्वलोके
दहित्व दीपं भगवतो चेतियेषु ॥
यदा च भोति जिनप्रादुर्भावो
आसन्नप्राप्तो भवति तथागतस्य ।
पुत्रो च भ्राता अथ पिता वा ज्ञातिको
सो ज्ञानस्कन्धं लभे नचिरेण ॥
बुद्धान क्षेत्रा नयुतामिता सहस्रा
पूरा भवेन्सुः यदि सर्षपाणां ।
शक्यं गणेतुं तुलय्य जानितुं वा
न बुद्धस्तूपे धरयतो एकदीपं ॥
अग्राहं बुद्धो वरदक्षिणीयो
अग्रां चरित्वा चारिकां विशिष्टां ।
करित्व पूजं गुणसागरस्य
विपाको अग्रो भवति अनोपमो ॥
वैडू[222ᵃ]र्यरत्नेहि मणीहि पूरा
सर्वा सियायं सहालोकधातु ।
शक्यं क्षपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥

2. C °kshapetum̃ çi° BC °çiri evarû° B °rûpân | na bu° C °stûpe rayato ekapradi° BC °dipam̃ na ta°. — 4. C °kâye bhava° B °rṇṇo | dṛiḍham̃ sapîṭho phalikham̃tu(C °bhu)jo accha°.

6. B °pto cara sarva° C °daritva di°. — 8. B °bhosi ji° BC °prâdurbhâvo âçanaprâpto bhagavato tathâ°. — 10. BC °bhrâtâ ca atha° C °pitâ ca jñâtiko vâ so° B °pitâ jñâtṛiko vâ so°.

12. C °ddhâna kshatrâ° BC °yutopamâm̃ sahasra pû° B °bhavetsuḥ | iha samapâṇam̃ | C °bhavetsu samayâçam̃ | . — 14. B °tulayiyitum̃ jâ° C °tum̃ turayitum̃ jâ°. — 16. B agrâha bu° C agrâraham̃ bu° B °dakshaṇî°. — 18. C °sâgaram̃sya vipâ °pame | B °pamâ | . — 20. BC °ṇîhi puro° C °sipâya sahâ° B °dhâtum̃ | C °dhâtum̃ | sarvaçiriyam̃ sahaloka-dhâtum̃ vastrân na çayyâm̃ vividhâni tasya çakyam̃ ksha°.

22. C °kshapetu çiri eva° B °çiri eva° C °ekapradipam̃ | .

कार्षापणेहि सहलोकधातुं
हेष्टा उपादाय भवाग्रपूरां ।
शक्यं क्षपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
क्षेत्रसहस्रा वरचंदनेन
हेष्टा उपादाय भवाग्रपूरां ।
शक्यं क्षपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
क्षेत्रा सहस्रा वज्रवस्त्रपूरा
यं देवलोके शुभकस्मि दुष्यं ।
शक्यं क्षपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
देवेषु दिव्या च रत्ना विचित्रा
नागासुरमनुजमहोरगानां ।
शक्यं क्षपयितुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
ये दिव्यगन्धा नरदेवलोके
तेहि भवेया सहा संप्रपूरा ।
शक्यं क्षपेतुं शिरिमेवरूपां
न बुद्धस्तूपे धरयतो एकदीपं ॥
प्रमाणं शक्य दिशि विदिशासु ज्ञातुं
आकाशधातु अयमेत्तिको ति ।

1. C -karmopaṇe° B karshâyaṇehi°. — 3. B °kyaṁ kshepe° BC °tuṁ vidha evarû° C °dharayatâṁ ekapradi°. — 5. BC kshetraṁ saha° B °pûrâṁ ça°.

7. BC °kyaṁ kshepetuṁ çiri eva° B °pâṁ | na bu° C °kapradîpaṁ | . — 9. BC kshetrâṁ saha ° râ ye deva° C °kasmiṁ du°.

11. BC °çiri eva° B °rûpâ na buddhasya stû° C °buddhaṁ stû ° kapradîpaṁ | . — 13. C *donne les vers* 16 *et* 18 *deux fois; la répétition est notée sous* c. C °vyâ ratanâ(C °nâṁ) vici° BCc °surâmanu ° nâṁ ça°. — 15. B çakyaṁ kshepa° C çakyaṁ kshepetuṁ vidha eva° c °kshapetuṁ° Bc ° çiri evarû° B °pâṁ | na bu ° kadvîpaṁ | Cc ° kapradîpaṁ | .

17. BC °sahasaṁpra°. — 19. BC °kyaṁ kshepetuṁ çiri eva(C °vaṁ)rû° C °kapradîpaṁ | .

21. BC pramâṇa ça ° dhâtumayam e(C °yam a)ttikâni | .

न बुद्धस्तूपे धरयतो एकदीपं
प्रमाण शक्यं गणयितुं पुण्यस्कन्धे ॥
छत्रं से दिन्नं भगवतो मारुतानां
बुद्धोत्तमस्य व्रजतो नरर्षभस्य ।
चित्तं प्रसादेत्व नरोत्तमस्मिं
मा बुद्धकायं तपे रश्मिराजा ॥
सो तं करित्वा अहं धर्मश्रेष्ठं
शतं सहस्रं मरुशक्र आहु ।
ब्रह्मापि आसि अहं ब्रह्मलोके
शतसहस्रं ददिय जिनस्य छत्रं ॥
राजा अभूषि अहं चक्रवर्ती
शतसहस्रं दशदिशाचरो भूयः ।
श्रेष्ठी अभूत् धनवां प्रभूतकोशो
गृहपति बहुधनो पुण्यवन्तो ॥
विंशच्च कोटि सुगतोत्तमानां
आगमित मे गुरुकृत सत्कृता च ।
शय्यासनेहि. . . . . . . . . . . . .
विहारास्तेषां कृतगन्धलिप्ताः ।
दौर्गन्धियं अपगतं सर्वं मह्यं
उष्णं च शीतं विवर्जितं मे ॥
तुष्टो च भोसि परमोदग्रचित्तो
पूजां च तेषां परमोत्तमानां ।
करोषि अलंकृत्वा शुभदर्शनीयं

1. C *passe ll.* 1-5. B °paṁ | pra ° skandha ccha°. — 3. B cchakyaṁ me ° ıutâyâṁ | bu°. — 5. B °detvâna utta ° kâye tama rasmi° C nabuddhakoye titirasmirâjâ ‖ so°.

7. BC °çreshṭaṁ çataṁ sa ° kra âha ‖. — 9. BC °si âhu bra° C °lokaṁ ça° BC °sraṁ tadeya(C °yaṁ) ji°.

11. B °shi âhu ca° C °shi âhu varacakra° B °daçavicavaıâṁ bhûyaḥ çre° C °diçacavaraṁ bhûyaḥ. — 13. B çreshṭi a° C çreshṭi abhûd dhana ° bhûtako gṛi° BC °nto viṁ°. — 15. BC viṁçaçca ko° B °mâṇâṁ | âgamitâ me gu° BC °tkṛitâ ça°.

17. BC çayyâsanehi vihâyas teshâṁ°. — 19. C saugandhi° BC °gate saıva°.

21. C °bhomi udagra° B °si paramo udagra ° shâṁ parametanâṁ | . — 23. C karohi eshâm alaṁkaritvâ yathâ darçanayo° (*page suivante,* l. 6) B °alaṁkaritvâ çu ° yaṁ me dadya çchatraṁ ji°.

दद्दित्व च्छत्रं जिनचेतियेहि ॥
तस्यापि भोति शुभ आत्मभावो
द्वात्रिंशतीहि स्फुट लक्षणेहि ।
येहि स्य नित्यं प्रतपति आत्मभावः
यूपो विशिष्टो यथ कांचनस्य ।
जाम्बूनदस्य यथ दर्शनीयो
असंप्रकीर्णो स्फुटो व्यंजनेहि ॥
अभिध्यप्राप्तो भवति भिषच्छ्रेष्ठो
चरन्तो नित्यं जिनचारिकासु ।
न भोगहीनो भवति कदाचिद्
देवान भोति गुरु पूजि[222b]तो च ॥
न कामभोगै रमते कदाचिद्
विशुद्धशीलो सद ब्रह्मचारी ।
समादियित्वा पवनं व्रजित्वा
अरिक्तध्यानो सुविशेषप्राप्तो ॥
न ध्यानहानिर्भवते कदाचित्
न बोधिचित्तं जहते कदाचित् ।
मैत्राविहारी सद हृष्टचित्तो
दद्दित्व च्छत्रं जिनचेतियेषु ॥
वाद्येषु पूजित्व नरर्षभस्य
न शोकशल्या प्रसहन्ति तस्य ।
मनोज्ञघोषो च मनुष्यलोके
स्वरं च तस्य विशुद्ध भोति ॥
विशुद्धश्रोतो च उदग्रचित्तो

2. B °âtmâbhâvo dvâ ° ṇehi yehi°. — 4. B °tyam̃ palapati â ° sya jâ°.

6. B jâmbunada° C °rçanayo atra prakî° B °nîyo apraki° BC °ṭo dyam̃janchi ‖. — 8. C abhidyaprâ ° shakaçreshṭo cara° B °shacchreshṭo cara°. — 10. C °vanti kadâci devânâ bho°.

12. B °bhogau rama° C °gaiḥ rama° C °hmacârim̃ |. — 14. B samâdiçitvâ° BC °pto na°.

16. BC na chânahâ° C °hânim̃ bhava° BC °vate kadâcit | na bo° B °hate kadâcit maitrâ° C °hate kadâcin sai°. — 18. C saitrâvi°. — 20. C vâdyatva pù ° çalyo prahasanti° B °çalyo prasahantasya mano°.

22. C °ghosham̃ ca manu° BC °ke | sva° B °ram̃ vata° BC °bhoti vi°. — 24. B °tto | vi° C °tto viçuddhacakshu ca su° BC °jâto çro°.

विशुद्धचक्षू च सुसंप्रजानो ।
श्रोतेन्द्रियेण सुउपेतो भोति
वादेत्व वाद्यं जिनचेतियेषु ॥
जिह्वास्य भोति तनुदर्शनीया
पद्मप्रकाशा यथ पुण्डरीकं ।
रक्त प्रवाडा यथ देवतानां
यं यं स्वरं ओसिरे दर्शनीयं ॥
न जडो भोति अजिह्वो [कुब्जो] न खंजो
न पि विच्छिन्नांगो विशिष्टो भोति ।
प्रवरात्मा भोति प्रवरात्मभावो
वादेत्व वाद्यं जिनचेतियेषु ॥
न तस्य कश्चिज्जनो दुर्मनो स्यात्
देवा च नागा मनुजा महोरगा ।
आश्वासप्राप्तो परे सर्वलोके
वादेत्व वाद्यं जिनचेतियेषु ॥
न जातु गिलानो भवे पाण्डुरागो
न चापि कुष्ठी नापि च किलासी ।
प्रशंसनीयं लभे आत्मभावं
वादेत्व वाद्यं जिनचेतियेषु ॥
प्रभूतचित्तो च अकुब्जगात्रो
उत्तप्तवर्णो यथ सुवर्णबिंबं ।
दृढसमाधि च असंप्रवेधी

2. C °ndriyena upeksha bhoti | vâdyetva vâdyam̃° B °ṇa su upekshatu bhoti | vâdyetvâ vâdyam̃° BC °shu ji°. — 4. C jihvasya bho° B °ti tadanuda° BC °nîyo padma° B °prakaçâyaḥ | pu° C °prakâçe | pu° BC °ṇḍarîke rakta°.

6. C °pravâya ca de° B °ḍâya ca de° BC °yam̃ yam̃ smaram̃ o° C °oçire da°. — 8. B na jaḍḍo bho° BC °bhoti na jaḍo aji ° pi niççitâṅgo vi° B °çishṭha bhoti pra° C °çishṭa bhoti pra°. — 10. C pravarâtmabhâvo vâdevâdetva° B pravarâtma bhoti | pravarâtma°.

12. C °no daumanasyam̃ devâ ca nâgâ âsvâsaprâ° B °no daurmanasyam̃ de ° nujo mahorago | â°. — 14. C âsvâsaprâ ° ke vâdyetva vâdyam̃°.

16. C °giràço bha° B °girâno bhave pâṇḍulâge na càpi kushṭi nâpi ca ki° C °câpi tushṭi nâ° BC °lâsi | . — 18. BC prasam̃çaniyam̃° C °labhed âtma° BC °vam̃ vâditva°. — 20. B °tto akubja° C °tto avakubja° ptavarṇṇâ yathâ suvarṇṇabim̃bam̃ | B °bim̃bam̃ dri°.

22. C dridham̃ sa° B driçam̃ sa° BC °mâdhim̃ ca asam̃° C °prabodhi vâdyetva° B °veshim̃ vâde°.

वादेत्व वाद्यं जिनचेतियेषु ॥
देवेषु खो ..... ईश्वरत्वं
मनुष्यलोकं पि गतु पूजनीयो ।
उत्तप्तवीर्यो भवति अमर्दनीयो
वादेत्व वाद्यं जिनचेतियेषु ॥
न सो कहिंचिज्जने अप्रसादं
न चापि कंचित्परुषं भणाति ।
पैशुन्य सर्वं विजहति सत्यवादी
वादेत्व वाद्यं जिनचेतियेषु ॥
अलंकारा कृत्व जिनचेतियेषु
स्नापित्व स्तूपानि तथागतानां ।
विशुद्धवाक्यो स्नपयित्व स्तूपं
रजो धोवमानो विरजस्य स्पृत्या ॥
धर्मं करित्वा करिकारधर्मं
आरोग्यप्राप्तो चरे सर्वलोके ।
प्रशंसनीयो भवते जनस्य
कारीषि दत्त्वा जिनचेतियेषु ॥
अखण्डशीलो च अरिक्तध्यानो
प्राप्नान सेवां धनमप्रसह्यं ।
आज्ञां करोति बहुकां जनस्य
कारीषि दत्त्वा जिनचेतियेषु ॥
श्मशानसंज्ञां जनयते दृष्टिकासु

2. BC deveshu bho içvaratve manu° B °loke api gantu pû° C °loke upagantuṁ pû° BC °niyo ua°. — 4. C °yo vâdyetva pâdyaṁ°.

6. B na lokahiṁ° C naro kahiṁcijjanaye apramâdaṁ na câpi kiṁcit puru° B °pi kiṁcin puru°. — 8. C °hati satvavâdi vâdyetva° B °tyavâdi vâde°. — 10. B kârîkṛi° C kâritvakṛi° B °snâyitva stû° C °pitvâ stû°.

12. C °vâkyâ snâpetya stû° B °kyo snâpetya stû° B °paṁ rajadhonamâtaṁ | narajasya smritya karikâradha° C °paṁ rajadhautamânaṁ narajâçca sprishṭâḥ | . — 14. B karikâradharmaṁ â° C dharmaṁ ca kâritva ka ° dharma â° BC °rvalokaṁ | .

16. BC prasaṁçanîyo° B °sya kâ ṛishi datvâ ji° C °rishu datvâ ji°. — 18. BC °prâptâ na se° C °sevi dhanam alpasatyaṁ | B °dhana alpasatyaṁ anyaṁ karo°. — 20. B anyaṁ karohi ba° C anya karo° BC °bahu âtmanasya | (C °syâ) kâ° B °kâ ṛishi datvâ ji° C °kâriti datvâ.

22. BC smaçânasaṁjño ja ° malolâ ca na ra° B °ktavitto | .

न कामलोलो च न रक्तचित्तो ।
लाभाय च्छन्दं [223ª] जहति अशेषं
कारीषि दत्त्वा जिनचेतियेषु ॥
न चित्तपीडां जनये परेषु
न खाद्यभोज्येन जने सौमनस्यं ।
न च दरिद्रो स न चापि रोगी
कारीषि दत्त्वा जिनचेतियेषु ॥
अमित्रपक्षो न च तस्य भोति
पूजेति बुद्धां सततं अभेद्यो ।
बुद्धं च धर्मं जिनश्रावकां च
कारीषि दत्त्वा जिनचेतियेषु ॥
क्षेत्रा सहस्रा बहवो अनन्ता
जाम्बूनदेन सिया सर्वपूरा ।
शक्यं क्षपेतुं शिरिमेवरूपां
न तैलविन्दुं जिनस्तूपे दत्त्वा ॥
सदा च भोति वशि आत्मचित्ते
न चेष्टमानो व्रजति कदाचित् ।
अभिन्नहस्तो च अभिन्नपादो
कारीषि दत्त्वा जिनचेतियेषु ॥
उन्मार्ग सर्वं पि जहाति तेन
येन व्रजन्ते बहुदुर्गतीयो ।
विशोधितो स्य भवे स्वर्गमार्गो
कारीषि दत्त्वा जिनचेतियेषु ॥
नामेत्व चित्तं सहलोकनाथे

2. B lábbo ca cchando ja° C làbhâva cchando ja° B °kàrishi datvâ ji° C °riti datvà ji°.

6. C na câpi dâridrya na câpi osarehi kàrishi datvà ji° B °dro na ca sa ohî kârishi datvà ji°. — 8. B °bhoti satatam̃ abhedyà pùjoti buddham̃ jina° C °buddham̃ satatam̃ abhedyá | . — 10. B jinaçrà° C °dharmam̃ ca jina çràva kàrishi datvà ji° B °kàrishî datvâ ji°.

12. C kshetràt sahasrâm̃ bahanto jà° BC °jâmbunade° B °dena çriyâ sa° C °siya sarvapùrṇṇe çakyam̃°. — 14. C °kyam̃ kshepatum̃ çiri evam̃rû° B °çiri eva° BC °vindu jinastûpa datvâ(C °tvà | ) sadà°.

16. B °âtmaceti na ceshṭa° C °âtmabhàvo na cettamâno°. — 18. C °sto ca abhinnavâdo kàrishi datvâ ji° B °kàṛishi datvà ji°. — 20. BC °jahati tena bhonti yena vra°.

22. BC °dhità(C °ta) syà çuve sva° C °rgo kari° BC °rishu datvà ji°. — 24. B nàmatvà ci° BC °ttam̃ siyalokanàthaiḥ tai(C °thais tai)la°.

तैलस्य विन्दुं जिनचेतियेषु ।
ददेय एकं शतधा करित्वा
तं पुण्यस्कन्धं क्षपयितुं न शक्यं ॥
इष्टिका गृह्य भगवतो चेतियेषु
पुण्यस्यार्थाय नरो चेढरेय ।
न तस्य जातु अमनोज्ञगन्धं
कायो स्य गन्धं लभे चन्दनस्य ॥
कल्पान कोटीनयुता सहस्रां
विशिष्टकायो भवते शुभांगो ।
विघुष्टशब्दो वरलक्षितांगो
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
विमानश्रेष्ठं लभते सुगन्धं
दिव्यं मनोज्ञं वरचन्दनस्य ।
न तत्र तृष्णां जनये कदाचित्
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
कोटीसहस्रं लभते अप्सराणां
मनोज्ञगन्धा च सुदर्शनीया ।
तासां न तृष्णां जनये कदाचित्
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
अष्टांगुपेतां जलशोभमानां
उद्यानश्रेष्ठां लभते पुष्करिण्यो ।
दिव्योत्पलेहि च शोभमाना
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥

2. C dadeyam ekaṁ° B °çatadhya kari° BC °tvâ na pu° B °skandho ksha°. — 4. BC ishṭi(B ishi)kaṁ gṛi ° shu puṇyasya arthâya naro(C °ya jano) cetiyeshu | puṇyasyâ(C °sya a)rthâya naro vedhayeyaṁ | (C °yaṁ) na°.

6. C °jñagandho kâyasya gandhaṁ labhe° B °jñagandhaṁ labhe° BC °bhe vanda°. — 8. B °çishṭhakâ ° vato çu° C °vata çubhâṅgo vi°. — 10. B vighushṭhaçabdo caralakshitâṅgo ço° C °lakshaṇâṅgo | .

12. BC °çreshṭaṁ la ° sya na ta°. — 14. BC °cit || ço ° sya ko°.

16. C °labhed apsa° BC °gandhaṁ su°. — 18. BC °cit | ço° B °çodhatva° C °stûpâṁ pu°. — 20. C °petaṁ ja° BC °çreshṭâṁ la° C °riṇyâḥ | B °riṇyâḥ di°.

22. B divyotparehi çobha° C °lehi çobha°.

परिवारस्तस्य भवते अनुरूपं
दिव्यं च घोषं शृणोति विशुद्धं ।
संगीतिशब्दानि सुरासुराणां
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
कथां च धार्मां श्रुणे देवतानां
संस्कारा सर्वे च दुःखा अनित्या ।
ग्राह्यं च भोति वरदान दानं
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
जराभिभूतो उपगतो स्वर्गलोकं
न तस्य भूयो इतो दुर्गतीयो ।
स बुद्धं च पश्यति मर्त्यलोके
शोधेत्व स्तूपं द्विपदोत्तमस्य ॥
कथां च कृत्वा शुभ देव[223$^{b}$]तानां
स्थपेत्व देवा बहुबुद्धस्तूपं ।
कालं करित्व उपगमि मर्त्यलोके
शोधेत्व स्तूपं पुरुषोत्तमस्य ॥
सो जातमात्रो स्मरे कल्पानन्तां
ये पूर्वं बुद्धा पूजित सत्कृता च ।
नामं च तेषां स्मरति गणं च धर्मं
शोधेत्व स्तूपं द्विपदोत्तमस्य ॥
अनुलेपेन भगवतो यो करोति
पूजां विशिष्टां सुमनोज्ञघोषां ।
सो लब्धलाभो विचरति सर्वलोके
आदिन्नसारो वरगन्ध दत्त्वा ॥

1. B pagi(?) vâtasyo bhavatânu° C °vâra tasyo bhavate surupam̃ di ° ṇoti çuddham̃ | . — 3. B °bdâni pura âsu° C °bdâni puraḥ âsu°. — 5. BC katham̃ ca dharmo çruṇe° C °skâra sa ° ḥkhâm anityâ | B °tyâ grâ°.

7. B °varadânam̃ ço° C °varadânamadânakam̃ ca ço°. — 9. BC janâbhibhûyo upa° C °gate sva° BC °loke na ta°.

11. B na bu° C na buddha dharmam̃ ca pa° BC °çyati satyalo°. — 13. BC °sthapetya de° C °devâḥ ba ° ddhajñâne | . — 15. B °marttâloke°.

17. C °mâtreṇa smarayesi kalpâm̃ pûrvam̃ ca bu° B °pûrva bu°. — 19. B nâmam̃ ca ca te°.

21. BC °lepanena bha° C °shṭâm̃ sujñagandhâm̃ so la°. — 23. B °ke | âdi° C °ke | adi° BC °ndha datvâ pra°.

प्रलुज्जकाले जिनशासनस्य
न सो इहागच्छति जम्बुद्वीपे ।
स्वर्गेषु संधावति तस्मि काले
गन्धानुलेपं करियान स्तूपे ॥
दुर्गन्धकामां सुजुगुप्सनीयां
वर्जेति नित्यं स्थितो शीलस्कन्धे ।
सदा चरन्तो इह ब्रह्मचर्यं
गन्धानुलेपं ददियान स्तूपे ॥
इतो च्यवित्वा मरुस्वर्गलोके
अथ सहस्रा तुलयति अप्रमेयां ।
करोति अर्थं बहुदेवतानां
गन्धानुलेपं ददियान स्तूपे ॥
यस्मिं च काले नरा भोन्ति आढ्या
अदुष्टचित्ता मृदुमार्दवा च ।
तस्मिन्तु काले स्थितो जम्बुद्वीपे
गन्धानुलेपं ददियान स्तूपे ॥
अपायभूमिं विजहिय सर्वां
आसन्नप्राप्तो स जिनस्य भोति ।
प्रतीतो भवति सुखप्रेमणीयो
गन्धानुलेपं ददियान स्तूपे ॥
विशिष्टवाक्यो भवति सुघोषो
प्रियो मनापो जनसत्कृतो च ।

1. C °lujyakâ° B °jinasâçana° BC °sya ‖ tato i° C °hâgacchasi jam̃bûdvî° BC °pe sva°. — 3. C °vati kâla tasmim̃ | ga° B °le | ga° BC °lepanam̃ ka° B °yânu stû° BC °pe du°. — 5. B °ndhakânâm̃ su° C °mâm̃ saju° BC °yâm̃ ‖ varjje ° skandho sa°.

7. C sadâ vara° BC °ryyam̃ | ga° C °nusepam̃° B °yânu stû° BC °pe i°. — 9. BC °ke‖ atha sahasro tu° C °tulatiyameyâm̃ B °yâm̃ karo°.

11. BC °nâm̃ | ga° C °lepa da° B °yânu stû° BC °pe ya°. — 13. B °nti âdyo ‖ adu° C °nti âḍhyo | adushṭacitto mṛidumodavâ ca tasmi° B °vâ ca tasmi°. — 15. BC °dvîpe | ga° B °yânu stû° BC °stûpe apâ°.

17. B °vijahi sarvâm̃ | âsanna° C °vijahi satvâ sarvam̃ | âsanna° BC °prâptâm̃ jina° B °sya bhavati prati°. — 19. C prapri bha ° ṇîyam̃ | ga° B °ṇiyo ‖ ga° BC °nulepanam̃ da° B °diyânu stû° BC °pe viçi°.

21. C °çishṭâ vâkyo° BC °to ca su°.

सुखं च तस्य सद सुप्रसन्नं
गन्धानुलेपं ददियान स्तूपे ॥
राजापि भोति वरचक्रवर्ती
श्रेष्ठी अमात्यो गृहपति पुण्यवन्तो ।
बुद्धो पि [भोति] प्रभंकरो धर्मस्वामी
गन्धानुलेपं ददियान स्तूपे ॥
मणिहारं दत्वा जिनचेतियेषु
उदग्रचित्तो प्रमुदितो वेगजातो ।
सो भोति राजा सह लक्षणेहि
महानुभावो गुरुकृतो चक्रवर्ती ॥
मणिविमानं रुचिर प्रेमणीयं
विचित्रवर्णं लभे दर्शनीयं ।
प्रासादमयं रतनामयं च
महारहाहि स्फुट वेदिकाहि ॥
सो राजधानीं लभते विशिष्टां
नारीगणेहि नरसंप्रपूरां ।
समां सुजातां सुविभक्तरूपां
प्रभूतभोगां बहुशो समन्ता ॥
सुभिक्षक्षेमां अपगतशर्करां
पुष्पावकीर्णां स्फुटावसक्तदामां ।
सुमनोज्ञघोषां प्रियदर्शनीयां

1. BC °nnaṁ | ga° B °gandhonu° C °lepe dadi° B °yânu stû° BC °pe râ°. — 3. BC râjâ vibho ° vartti || çreshṭi(C °shṭi) amâ ° nto bu°. — 5. BC °bhaṁkaradha° B °lepa dadiyânu stûpe | .

7. BC °ṇivâlaṁ datvâ ji°. — 9. C so bhavati râ° BC °râjasya su(B °du)laksha° C °kṛitaç cakra°.

11. C °naṁ suru° BC °premaṇâyaṁ vi ° rçaṇiyaṁ prâ°. — 13. B °nâmayaṁ mahârhatokanehi sphu° C °yaṁ ca | olokanehi sphu ° kâbhiḥ so°. — 15. BC so rûpadhârî labha ° çishṭaṁ(C °shṭaṁ | ) nâ°.

17. B °jâtaṁ su ° husamantâ subhi°. — 19. B °bhikshakshamâ apa° C °bhikshamâ-(C °nâ)nâ apa° B °çarkkara pushpâ ° rṇṇâṁ sphutâvaçakta° C ° ṭâ avaçakta°.

21. B °antishṭha uptaṁ ba° C ° antishṭaguptaṁ ba ° madhye udyânarasyâṁ çubharûpâṁ | prabhûtabhogâṁ bahuçâ samantâḥ subhikshamânâ apagataçarkkarâṁ ca | pushpâvakirṇṇâ sphuṭâ avaçaktadâmâṁ sumanojñaghoshâṁ priyadarçanîyâṁ | antishṭaguptaṁ bahuçâlimadhye udyâ°.

अन्तिष्ठगुप्तां बहुशालिमध्ये ॥
उद्यानरम्यां शुभरुतसन्निनादां
जालविचित्रां [224ᵃ] सुखसंप्रवेशां ।
ध्वजपताकाहि स्फुटां सुरम्यां
छत्रेहि छन्नां शुभदर्शनीयां ॥
न तत्र चोरा न शठा न धूर्ता
राज्ये भवन्ति परवित्तहानी ।
ईर्यापथेन उपपेत सत्वा
विजिते सन्ति सदा मैत्रचित्ता ॥
अतश्च देवां व्रजते सुपुण्यो
स्वर्गेषु भोति परिपृच्छनीयो ।
किं कार्यं शुक्लं कथमाचरेम
यदा व्रजेम इतो मर्त्यलोके ॥
बुद्धांश्च क्षिप्रं लभे दक्षिणीयां
पश्चित्व सो पूजति लोकनाथां ।
बोधाय छन्दं जनयति पूजं कृत्वा
तेनैव बुद्धा इतरत्र व्याकरोन्ति ॥
बहुज्ञानी भवति महानुभावो
विशेषभूमिस्थितो अग्रसत्वो ।
चित्तप्रसादं भगवतो एकं कृत्वा
कल्पसहस्रं जहे दुर्गतीयो ॥
आरोचयामि इमु भाषमाणो
मा कोचि कांक्षां जने भाषतो मे ।

2. C °nninâde | jâ° B °nninâdam̃ jâ° BC °jâlâm̃ vici° B sukhatrâm̃ supraveçâm̃ || . — 4. BC dhvajâpatâkâhi sphuṭâ suramyâm̃ cchatrâhi channâm̃°.

6. BC °râjyo bhavati paracittahânim̃ || . — 8. B °thena suupeta° C °thena sa upetasatvâm̃ jîvita santi ca sadâ° B °jita santi sadâ° C °cittâḥ | .

10. BC °puṇyâ sva° C °svargam̃shu°. — 12. BC °kâryya çu° C °çukla ka ° to ca martte iha dharmaloke | . — 14. B °kshipre la° BC °bhed dakshi° C °paçyanti to sau pûjyati lokanâtham̃ | .

16. C °yati ca pû° BC °pûjâm̃ kṛi° C °roti | . — 18. B alujñânî bha° C anujñâ bha° bhâvâ vi° BC °bhûmim̃ sthi° B °tvo ci°. — 20. C cittopra° B °vatâ e° C °vato eka kṛi° rgatim̃ yo(?) | B °rgato yo | .

22. C °imam̃ bhâshayâmi mâ kaçci kâm̃kshâ ja°.

मा बुद्धज्ञानं क्षिपिया अवीचिं
भवेय पश्चा सुदुःखितो कृच्छ्रप्राप्तः ॥
यो जालकानि उपनये चेतियेषु
लोकप्रदीपे महापुण्यक्षेत्रे ।
सो मारजालं विधापिय अप्रमत्तो
भोति नरेन्द्रो दशबलो निष्क्लेशो ॥
अपायभूमिं विजहति अप्रमत्तो
सदा च बुद्धं हतरज सत्करोति ।
सदा च भोति बलचक्रवर्ती
समन्तलोकं उपगत पुण्यवन्तो ॥
देवेषु भोति मरुपति पूजनीयो
दिव्यं च आयुं लभे तत्र क्षिप्रं ।
यशं च दिव्यं तथापि च दिव्यवर्णं
दिव्यं च सौख्यं असदृशमीश्वरीयं ॥
रूपां च शब्दांस्तथ पुनर्गन्धश्रेष्ठां
स्पृष्टव्यां तथा लभे देवभूतो ।
उल्लोकनीयो भवति महानुभावो
न कामतृष्णां जनयति अप्सरासु ॥
ततो च्यवित्व व्रजति मनुष्यलोकं
सुगन्धिताङ्गो भवति विशिष्टवर्णो ।
न पारिहाणिं लभते कदाचित्
छोरेत्व जालं जिनचेतियेषु ॥

1. C °ciṁ prâpta bhaveyâ pa ° ḥkhita kṛi° B °cchraprâptaḥ yo jâ°. — 3. C °ni apanaye ce° B °yeshu | lo ° dîpo mahâ ° kshetre so mâ°. — 5. BC so mâlajâ° C °jâlaṁ vividhâni ca apramatto | bhogâ nare° B °tto | bhotâ narendrâ daçabalâ nishkileçâ apâ° C °balanishkileço.

7. C °miṁ daçabala apra° BC °tto | sadâ°. — 9. B yadâ câ bho° C yadâ ca bho° B °rtti | santasya lo° BC °loke u° B °ganta puṇyâvanto BC °nto de°.

11. C devaisha bhonti maru° B devesha bho ° rupatti pû° C °âyûṁ labhet tatra°. — 13. BC °içvaro yaṁ rû°. — 15. C °n tatha pûrṇṇagaṁdhâṁ | çreshṭâṁ sastabdhâṁ labhed deva° B °tathâ pu ° çreshṭâṁ | spashṭabdhâṁ labhe° BC °bhûto u°.

17. B °llokami bha° BC °bhâvo | na kâ° C °psarâṁsu. — 19. C °lokaṁ | su° BC °rṇṇo na pâ°.

21. C °hâni la° B °hâṇi labhave kadâcit || cchore° C °cit | cchaletva jâ° B °shu çû°.

शूरो च भवति दृढव्रत अप्रमत्तो
न कामभोगे सुरतिं जनेति ।
नैष्क्रम्यतो भवति अदीनचित्तो
छोरेत्व जालं जिनचेतियेषु ॥
सो अक्षणानि परिवर्जयित्वा
क्षणा च तस्य भवन्ति विशिष्टा ।
बुद्धान पूजां अतुलियां सो करोति
छोरेत्व जालं जिनचेतियेषु ॥
न बोधिचित्तं विजहति सो कदाचित्
न खण्डशीलो भवति असंवृतो वा ।
धर्मं विरागं लभे सो विशुद्धं
छोरेत्व जालं जिनचेतियेषु ॥
दौर्वर्ण्यियं च जहे सर्वकालं
दौष्प्रज्ञियं च विजह[224b]ति सो अशेषं ।
विशेषप्राप्तो विचरति सर्वलोके
छोरेत्व जालं जिनचेतियेषु ॥
लाभी च भोति शुचिभोजनानां
वस्त्रां विशिष्टां लभे सुवर्णचित्रां ।
रङ्गोपपेतां सुरुचिरदर्शनीयां
छोरेत्व जालं जिनचेतियेषु ॥
अभ्युद्धरित्वान जिनचेतियेषु
निर्माल्यं तुष्टो प्रमुदितो वेगजातो ।
दुःखां खरां वाचं(?) जुगुप्समानो

1. B çûlo ca bha° C çûro bha°. — 3. C nairkramyamâno bha° B °shkramâto bha ° tto cchelatvaraṁ ji ° shu so a° C °tto ccholetva satvaṁ ji°. — 5. BC °bhavati viçishṭho | .

7. C buddhâç ca pû ° ti cchâdetva jâ° B °ti cchâletva jâ ° shu na bo°. — 9. C °dhisatvaṁ vija°.

11. B °ccholetva° C °cchodetva°. — 13. B dauvarṇṇayaṁ jahe° C dauvarṇṇaṁyaṁ ca jahe° B °sarvaṁ kâ° C °laṁ dushpra° B °shprajñayâṁ ca vi°. — 15. B °ke cchedetva jâ° C °cchodetvâ jâ°.

17. C °nâṁ citriṁ viçishṭo labhe° B °nâṁ vistriṁ viçishṭiṁ labhe°. — 19. B °yâṁ cchâretva° C °yâṁ cchâdetva°.

21. C °rmâlya dushṭo° B °lyaṁ dushṭo° C °jâtoḥ | . — 23. C °kharâṁ ca sa jugupsaniyaṁ ârâ° B °kharâṁ jugupsaniyâṁ ârâ°.

आरागये सो दशबलसार्थवाहं ॥
प्रासादिको भवति विशुद्धकायो
उल्लोकनीयो बहुजनपूजितो च ।
न तस्य राजा भवे दुष्टचित्तो
यो चेतिये अपनयि जीर्णपुष्पं ॥
कुमार्ग तस्यापिहिता भवन्ति
यो शीलस्कन्धे स्थितो बोधिसत्वो ।
अभ्युद्धरेया जिनचेतियेषु
ओसिरे पुष्प पुरिमं मिलानं ॥
शोकं च दोषं च जहे सर्वकालं
रागं च काये जहे सर्व अशेषां ।
आश्वासप्राप्तो सो अनन्तकल्पां
यो चेतिये अपनये जीर्णपुष्पं ॥
बुद्धो च भोति सहसार्थवाहो
अनन्ततेजेन मरुपूजनीयो ।
अलंकृतो भवति विशुद्धकायो
यो चेतिये अपनये जीर्णपुष्पं ॥
पंच ददेया शुभदिव्यपुष्पां
मान्दारवां अथ पाटलां वा [निर्माल्यां] ।
यो जीर्णं पुष्पं अपनये चेतियेषु
विपाकु तस्य भवति स शोभमानो ॥
न तस्य काये क्रमति विषं न शस्त्रं
हुतासनं ज्वलितो अग्निस्कन्धो ।

2. BC °jito ca na ta°. — 4. BC °dushṭhaci° B °tto yà ceti° BC °yi jinapushpam̃ | .

6. C kumâga tasyâpi ° ndhe sthita bo° BC °tvo abhyu°. — 8. B °yeshu | osârapu° C °osare pu° BC °nam̃ ço°. — 10. B °lam̃ | ràgam̃ ca kà° C °lam̃ râgam̃ ca kà ° rvaçeshâm̃ | B °shâm̃ âçvà°.

12. C °pto so nanta° B °lpâm̃ | yo ce° BC °shpâm̃ bu°. — 14. C °tejo marùpû° B °niyo alam̃°.

16. B °kàyo | yo ce° C °kàyo ye ce° B °shpam̃ pam̃°. — 18. B °pushpam̃ | mâ° C °pushpam̃ mandâ° B °ravâm atha pâ° C °pâtalâm̃ vâ° BC °rmâlya so°. — 20. BC so apanaye cetiyeshu | vi° C °pàkakùṭasya° B °tasyo bha° BC °ti sa çobhano(C °ne) na ta°.

22. C na tasyaiva kà ° stram̃ | hu ° nam̃ ca jvalità agniskandhau cau° B °tâsano jvalitagniskandho cau°.

चौरा पि तं न प्रसहन्ति पापा
यो जीर्णं पुष्पं अपनये चेतियेषु ॥
न तस्य पुण्यं सुकरं प्रकीर्तितुं
यन्तेन पुण्यं सुमहत् गृहीतं ।
ओसन्नपुष्पं जिनचेतियेषु
छोरेत्व तुष्टो प्रमुदितवेगजातो ॥
उद्विद्धकायो भवति उदारो
सदा चरन्तो शुभकर्मश्रेष्ठं ।
न तस्य दूरे वरअग्रबोधि
छोरेत्व निर्माल्यं जिनस्य स्तूपे ॥
यो चन्दनं किरेय नायकस्य
छन्दं जनेत्वा परमार्थबोधे ।
सो भोति लोके सद पूजनीयो
प्रासादिको सुमनो तेजवन्तो ॥
तस्यैव राज्ञो प्रणमति सर्वलोको
देवा नागा च मनुजा महोरगा [च] ।
सर्वा सहस्रां कुसुमितलोकधातुं
प्राशासि वीरो ततो ईश्वरत्वे ॥
ये तस्य राज्ये निवसन्ति लोके
प्रतिष्ठन्ति ते वरबुद्धिज्ञाने ।
ते सर्वपापेषु अतिक्रमित्वा
देवमनुष्येषु चरन्ति धर्मं ॥
परिवारस्तस्य भवति अभेद्यो

1. B cauro pi ° pâpam̃ so° C cauro pi tam̃ na prajahanti pâpam̃ so° B °jirṇṇapu°. — 3. C °ṇyam̃ mahatâ gṛi° B °ṇyam̃ sumahata gṛi°. — 5. C °shu cchâdetva° B °shu | ccho° BC °jàto u°.

7. C °kàye bha° C °ro | sa° B °nto | çu° BC °çreshṭam̃ na ta°. — 9. B °sya duve va° BC °varamagrabodhim̃ cchore(C °de)tva nirmâ(B °nimâ)lya ji°.

11. C ye candanam̃ ca kare° B °nam̃ kare ° ndam̃ janayitva pa° C °netva pa° BC °bodhaye | . — 13. B °niye prâ° BC °dikà su°. — 15. C °ràjà praṇa ° loke de° BC °devâ ca nà° C °ragàḥ sarvàm̃°.

17. BC °sràm̃ sukumi ° tum̃ prâsâsi vi° C °ratvam̃ | . — 19. BC °shṭhate ti vara°.

21. BC °shu abhikra° C °devâmanu°. — 23. BC °vàritasyâ bhavati abhedya pu° C °tivanto pra° BC °prajñâvanto | .

पुण्यवन्तो स्मृतिवन्त प्रज्ञवन्तो ।
आ[225ª]श्वासप्राप्तो विचरति सर्वलोके
यथाभिप्रायं जनयति तेषु प्रीतिं ॥
प्रपूरवाक्यं स्वराङ्गं भवति शुद्धं
ज्ञापेति सत्वान् सुसखिलश्लक्ष्णवाक्यो ।
न तस्य कोपि जने ईश्वरीयं
उल्लोकनीयो भवति बहुजनस्य ॥
प्रियवद्य दानं तथ अर्थचर्या
समानार्थता च बहुजनस्य ।
अक्रुष्टवन्तो न जनेति रोषं
यो अंगुलीहि नमे बुद्धस्तूपं ॥
न सो अपायं प्रपतेय भूयः
वर्जेति हीनां कुल मर्त्यलोके ।
आढ्यश्च सो भोति प्रभूतकोशो
यो अंजलीये वन्दति बुद्धस्तूपं ॥
देवेन्द्र भोति गत देवलोकं
मनुष्यभूतो पि च भोति राजा ।
न पारिहानि च कदाचि तस्य
यो अंजलीये वन्दति बुद्धस्तूपं ॥
अयुक्तवाचं न कदाचि भाषे
सुभाषितं भाषति नित्यकालं ।
अतृप्त सत्वा वचनेन तस्य
यं सो प्रमुंचेद्वरमेकवाचं ॥

2. C °prîti | . — 4. BC °ti çuddho jñâyeti° C °satvâm̃ susakhilo çla°.

6. C °tasya kârî(?) jane° B °ko vi jane° BC °nîyam̃ bha ° nasya pri°. — 8. BC °nam̃ | ta ° caryâm̃ sa° B °nârthâm̃ ca ba° C °rthavanto ba° BC °sya a°. — 10. C akushṭe na ja° B akushṭava° BC °sham̃ | yo aṅgu(C am̃ja)lihi na ° stûpe ra so apâ°.

12. BC ra so apâ° B °yaḥ | va° BC °kula martyaloké âḍhya°. — 14. BC °ço || yo am̃jaliyo va ° pam̃ de°.

16. B °loke | ma° C °loke ma° B °râjà na°. — 18. B na khâri hâ° BC °hânim̃ ca kadâcit tasya° B °sya | añjaliyo va° C °lîyo vadanti bu°. — 20. BC ayoktapatram̃ na kadâcid bhâshe su°.

22. B °vâcâm̃ | .

कालं करोन्तो जिनमदृशासि
मनोज्ञघोषां वसे राजधानीं ।
सो इन्द्रकीले स्थित लोकनाथं
पुष्पां ग्रहेत्वा अभिकिरे वेगजातो ॥
स्वकस्मिं गृहे जिनमद्दशासि
भुंजित्व भक्तं वदन्त धर्मं ।
प्रसादजातो जिन सत्करोति
गृहीत्व पात्रं व्रजे नायकस्य ॥
प्रतिगृह्णते तस्य जिनोऽन्तिकातो
ज्ञात्वान चित्तं चरितं उदारं ।
तस्य यशो भेष्यति देवलोके
विशिष्ट लोके असदृशो दक्षिणीयो ॥
गृहीत ज्ञात्वा सुगतेन पात्रं
सो वेगजातो परितुष्टचित्तो ।
उल्लोकयित्वा तद देवलोकं
जनेय छन्दं इममेवरूपं ॥
मोचेय सत्वां बहुदुःखप्राप्तां
अन्धान चक्षु सिय सर्वलोके ।
आलोकप्राप्तो तमस्तिमिरस्य घाती
अतीर्णसत्वानहमपि तारयेयं ॥
अमुक्त मोचेयमसंस्कृतातो
स्पृशित्व शान्तां वरमग्रबोधिं ।
चरे अहं दशदिशा असंप्रकंपो
बुद्धित्व ज्ञानं दुःखितां प्रमोचे ॥

1. B °rontà jinam adriçâmi ma° C °ronti jinam addṛiçâmi ma ° dhâni | . — 3. BC °kilo sthi° C °shpâm̃ gṛihitvâ° BC °bhikile ve°. — 5. C svapam̃cakasmim̃ gṛi ° ddaçâsmim̃ bhum̃° B °ddaçâm̃si bhum̃° C °ktam̃ ca va° BC °danti dha°.

7. BC prâsâda° B °vrajennâya°. — 9. BC °gṛihnate° C °jino nti° BC °cittaca°.

11. B °viçishṭhalo°. — 13. C °tram̃ sâ ve° B °jâtâ pari°. — 15. B °tvâ tta devalo° C °tada lovalokam̃ janeya cchandam̃si yam eva° B °chandasi yam̃ eva°.

17. C °satvo ba° BC °prâptam̃ andhâ°. — 19. C °pto tamatimirasya ghâṭi uttîrṇṇa ° pi târam̃peyam̃ | .

21. C °ceya nasam̃ ° to pṛiçi° BC °çânto vara°. — 23. C valam̃ hi daçamahim̃ hi asapra° B cale aham̃ daçabi asam̃° BC °buddhatva jñâ° C °ḥkhitâ pramoca | .

ज्ञात्वान तस्य प्रणिधिमेवरूपां
यथा तं चित्तं ततो बुद्धज्ञाने ।
स्मितं करित्वा जिनो व्याकरोति
बुद्धो तुवं भेष्यसि लोकनाथो ॥

इदमवोचद्भगवानात्तमना विशुद्धमति भिक्षुः सदेवमानुषासुरलोको भगवतो भाषितमभ्यनन्दे ॥

अवलोकितं नाम सूत्रं महावस्तुस्य परिवारं समाप्तं ॥

बोधिसत्वो यथा वीरो नैरंजनामुपागमे ।
अथ कालो महा[225b]नागो एकको व अनुचिन्तयत् ॥
यथायं रणते पृथिवी कंसपात्रीव ताडिता ।
निःसंशयं महावीरो लोके प्रादुर्भविष्यति ॥
रणतीं पृथिवीं श्रुत्वा नन्दिघोषसमाकुलां ।
भवनातो उत्तरित्वान समन्तं स विलोकये ॥
विलोकयन्तो महानागो असदृशं पुरुषोत्तमं ।
अग्निस्कन्धं ज्वलमानं विद्युं वापि घनान्तरे ॥
नैरंजनायां तीरे अद्रुतगामि अनिघो पुरुषसिंहो ।
घृतकृतनिभाननस्तं नागो काल भवन्तं वन्दे ॥
ततो उदग्रो समानो प्रीतिसुखसमर्पितो ।
बोधिसत्वं नमस्यन्तो इमां गाथामभाषत ॥
यादृशा मे पुरा दृष्टा लोकनाथा महायशाः ।
तेषां तुवं पि सदृशो अत्र मे नास्ति संशयः ॥

1. B °ṇidhi evarû° C °yathaiva ci° BC °ddhajñâne smi°. — 3. C °buddhaṁ stuvaṁ° B °buddhe tu°. — 5. B °viçumati bhi° C °mânusho ca loko°.

7. C iti çrîmahâvastuavadâne avalo°. — 8. C °yadà viro nai°. — 9. BC atha kolo ma° kakoçam anu° B °ntayana | C °ntayaṁ | . — 10. C yathâ raṇate pṛi° B °vi kaṁçapâ° C °pâtreva tâ°.

11. BC niḥçaṁsayaṁ°. — 12. C raṇatiṁ pṛi° BC °thivî çru°. — 13. C °samantena vi° B °ntaṁ na vi°. — 14. C °lokayaṁ ma° B °asadṛiçâ pu° C °dṛiço pu°. — 15. B °dyuṁ vâtra gha° C °vâta gha°.

16. C °gâmî anighosha pu° B °gho | puru°. — 17. BC °nâgakâlasamaye bhavantu vande ‖ . — 18. BC °dagrà sumano prî°. — 19. C °bhâshi ‖ B °shati | . — 20. BC °dṛishṭvâ lo° C °yaçâ | .

यथा उद्धरसे पादं दक्षिणं पुरुषोत्तम ।
दिशामभिविलोकेन्तो अद्य बुद्धो भविष्यसि ॥
यथेयं रणते पृथ्वी कंसपात्रीव ताडिता ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च भवनं मह्यं अन्धकारतमिस्रकं ।
ओभासेन स्फुटं सर्वं अद्य बुद्धो भविष्यसि ॥
यथा विमानो तेजेन स्फुटो तिष्ठति सर्वशो ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च विमला नेत्रा विशुद्धा मम नायक ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा चीवरनिक्षेपा यथा च अवगाहसि ।
नैरंजनां शीतकालां अद्य बुद्धो भविष्यसि ॥
यथा नैरञ्जना रम्या कुसुमेहि समाकुला ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च पुष्पा वर्षन्ति देवा क्षिपन्ति अम्बरा ।
वृक्षा च प्रणता सर्वे अद्य बुद्धो भविष्यसि ॥

शुचिजलं च वहते प्रतिपूर्णं
पार्थिवोत्तमसुतो अवगाह्य ।
अभ्युदयन्तो अभिषेचयित्वा
उपागमे पुरिमबुद्धनिषद्यां ॥
सर्वमहीं सचतुर्द्वीपसशैलां
खेडपिण्डं व अनपेक्षो जहित्वा ।

1. C yathà me uddha° BC °ttamaṁ | . — 2. C °lokyanto a° B °vishyati | . — 3. C yathâyaṁ ra ° pàtreva tàḍitâḥ | . — 4. B °viro a° C °viro a ° shyati || . — 5. B °bhagavàn ma° C °bhagavan ma° BC °kàratimisakaṁ | .

6. B °shyati || . — 7. C °vimâna °sphuṭaṁ ti° B °rvaço niḥ°. — 8. B niḥçaṁsayaṁ° C niḥçaṁsayaṁ saṁçayaṁ ma° BC °viro adya°. — 9. C °çuddha ma° BC °yakaḥ | . — 10. BC niḥçaṁsayaṁ ° viro a° B °vishyati | .

12. C °raṁjanà çi°. — 13. C °kulâḥ | . — 14. BC niḥçaṁsayaṁ mahâviro a°. — 15. B °pushpa va° C °pushpa varsheti devâḥ kshapanti° B °và kshepanti° BC °mbaràḥ | .

16. C vṛikshâgra praṇa° B °shyati || C °shyati çu°. — 17. B °pratipûrṇṇu(?) pâ° BC °vagrâhya° B °hya gâtra abhyu° C °hya gâtrâbhyu°. — 19. BC °shecetvâ upâdhame | pu ° dyàṁ sa°.

21. C sarvaṁ mahiṁ sa ca° BC °caturdvi ° làṁ | khedapiṇḍam iva a ° tvâ yâce°.

याचे स्वस्तिकं तृणां नरसिंहो
यत्र निषण्णो स स्पृशे वरबोधिं ॥
तस्य तृणां मृदुकतूलनिकाशां
स्वस्तिको कनकबिम्बनिभस्य ।
वेगजातु अददे तृणमुष्टिं
तं गृह्य च मृदुतूलांगुलपाणिः ॥

अथ खलु बोधिसत्वो सिंहविक्रान्तं विक्रमे अनुत्तरस्य अमृतस्य आहरणता[226a]ये । नागविक्रान्तं विक्रमे । ऋषभविक्रान्तं विक्रमे । हंसविक्रान्तं विक्रमे । क्रौञ्चविक्रान्तं विक्रमे । दुष्प्रधर्षविक्रान्तं विक्रमे । अग्रोत्पादविक्रान्तं विक्रमे । श्रेष्ठोत्पादविक्रान्तं विक्रमे । पूर्वोत्पादविक्रान्तं विक्रमे । युगोत्पादविक्रान्तं विक्रमे । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमे । शत्रुमथनविक्रान्तं विक्रमे । अपराजितविक्रान्तं विक्रमे । महापुरुषविक्रान्तं विक्रमे । अलीनविक्रान्तं विक्रमे । अदीनविक्रान्तं विक्रमे । अहीनविक्रान्तं विक्रमे । अभीतविक्रान्तं विक्रमे । हितैषीअनन्धकारीकरणताये महाविक्रान्तं विक्रमे । महासंग्रामविजयाये अनुत्तरस्य अमृतस्य आहरणताये विक्रान्तं विक्रमे ॥

अथ खलु बोधिसत्वं सिंहविक्रान्तं विक्रमन्तं । नागविक्रान्तं विक्रमन्तं । ऋषभविक्रान्तं विक्रमन्तं । हंसविक्रान्तं विक्रमन्तं । क्रौञ्चविक्रान्तं विक्रमन्तं । दुष्प्रधर्षविक्रान्तं विक्रमन्तं । अग्रोत्पादविक्रान्तं विक्रमन्तं । श्रेष्ठोत्पादविक्रान्तं विक्रमन्तं । पूर्वोत्पादविक्रान्तं विक्रमन्तं । युगोत्पादविक्रान्तं विक्रमन्तं । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमन्तं । शत्रुमथनविक्रान्तं विक्रमन्तं । अपराजितविक्रान्तं विक्रमन्तं । महा-

1. BC °sharṇno spriçe vara°. — 3. B °ṇâṁ mridukûla° C °dutûlani ° bhasyâ ve° B °sya ve°. — 5. BC °tu adaye tri BC °grihya mri° C °lâṁgulim pâṇiḥ ‖ .

7. BC °mritasya âraṇatâye | . — 9[2]. BC dushyadha° C °dharmavikrâ°. — 9[3]. C agrotpâdavikrame | . — 10[1]. BC çreshṭotpâ°.

11[2]. BC çatrurmatha°. — 12[3]. *Le passage compris entre* 12[3] *et la fin du paragraphe est répété dans* B *et* C, *la répétition est désignée par* b c. — 13[1]. c ° kramena | . — 13[3]. Bb Cc atitavi°. — 14[1]. Cc °shîandhanakârî° b °anaṁdhakârî° C °ṇatâyair mahâ°. — 14[2]. C mahâgrâ° c ° yâye amritasya anuttarasya âha° C °mritasya âraṇatâye mahânâgavikrâ° bc °tâye mahâvikrâ ° krameti ‖ a° BC °krame | ali°.

16[1]. C °satvo siṁ°. — 17[1]. C haṁsavikrâtaṁ | taṁ vikrama°. — 17[2]. C kroṁcavikrâ°. — 17[3]. BC dushyadha° C °dharmavikrâ°. — 18[1]. C agotpâda ° kramaṁ çre°. — 18[2]. C çreshṭotpâ °. — 19[1]. C °mantaṁ | pûgo(?)tpâdavikrântaṁ vikramantaṁ | praṇi°. — 20[1]. BC çatrurmatha° C °kramaṁ | . — 20[2]. C °kramaṁ | . — 20[3]. C °kramaṁ.

पुरुषविक्रान्तं विक्रमन्तं । अलीनविक्रान्तं विक्रमन्तं । अदीनविक्रान्तं विक्रमन्तं । अभीतविक्रान्तं विक्रमन्तं । हितैषीअनन्धकारीकरणताये महाविक्रान्तं विक्रमन्तं । महासंग्रामविजयाये अनुत्तरस्य अमृतस्य आहरणताये महाविक्रान्तं विक्रमन्तं पंच वाणशतानि बोधिसत्वं अनुप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सु: । पंच हंसशतानि बोधिसत्वं अनुप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सु: । पञ्च क्रौञ्चशतानि बोधिसत्वमनुप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सु: । पंच मयूर[226b]शतानि बोधिसत्वमनुप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सु: । पंच जीवंजीवकशतानि बोधिसत्वमनुप्रदक्षिणीकरोन्ता अनुपरिवर्तेन्सु: । पंच कन्याशतानि बोधिसत्वमनुप्रदक्षिणीकरोन्ता अनुवर्तेन्सु: ॥

कालो नाम नागराजा अद्दर्शि दृष्ट्वा च पुनर्बोधिसत्वमेतदुवाच ॥ एहि महाश्रमण एहि महाश्रमण येन त्वं महाश्रमण मार्गेण आगच्छसि स भगवां पि महाश्रमण क्रकुच्छन्दो एतेन मार्गेण आगतो सो च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो त्वं पि अद्य महाश्रमण एतेन मार्गेण आगच्छसि अद्य तुवं पि अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यसि । येन महाश्रमण मार्गेणागच्छसि भगवानपि कोनाकमुनि एतेन मार्गेण आगतो सो च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो त्वं पि महाश्रमण एतेन मार्गेण आगच्छसि अद्य त्वं पि अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यसि । येन त्वं महाश्रमण मार्गेणागच्छसि भगवां महाश्रमण काश्यपो एतेन मार्गेणागतो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो त्वं पि महाश्रमण एतेन मार्गेणागच्छसि अद्य त्वं पि सम्यक्संबोधिमभिसंबुध्यिष्यसि ॥

अथ खलु कालो नागराजा बोधिमण्डं गच्छन्तं गाथाभिरभिस्तवे ॥

1[1]. C °kramaṁ | . — 1[2]. C adina ° kramaṁ | B °kramantaṁ | adinavikrânta vikramantaṁ | ati°. — 2[1]. B atilavikrâ° C °kramaṁ hi°. — 2[2]. B °shînaandha° C °shiandhanakâ° BC °nâvikrânta vikramaṁ | . — 3. BC tâye mahâsaṁ° C °kramaṁ | paṁcâ vâṇa° B °mantaṁ | paṁca vâṇiça° C °satvo anu° B °ntâ aluparivarttetsuḥ | C °ntâ | anuvarttayetsuḥ | . —4. B °kshiṇikarokarontâ° C °nuprari° BC °rttetsuḥ || . — 5. B °anuvarttetsuḥ || .
6. BC °rttetsuḥ || . — 7. C °vaṁjivaçatâ °ntâ pari° BC °rttetsuḥ || . — 8. BC paṁca kaṁnyâ ° rttetsuḥ || . — 10[1]. C °jâ adarçi dṛi ° na bodhi°. — 10[2]. C ehi mahâçravaṇa yena tvaṁ mahâçravaṇa mârge° BC °rgeṇa âgacchati || sa bha° C °bhagavân api mahâçravaṇo krakucchando e ° to sau ca anu ° ddho tasmin mahâçravaṇo ete° B °ddho tasmin asmân mahâçramaṇa ete° BC °cchasi | adya° C °râṁ saṁmya°.

14. B tena mahâçramaṇe mârgenâgacchasi | bha° C yena mahâçravaṇena mârgeṇa âgacchasi | bha ° to sau ca anu ° dhim adhisaṁbuddho tvaṁ pi mahâçravaṇa e° BC °cchasi | adya° B °ttarâ samya° C °ttarâ saṁmya° B °shyati || .

17. C °çramaṇa mârgeṇâgacchasi | bhagavân mahâçravaṇa kâçya° B °po eteṇâ mârgeṇâ° B °ddho || tvaṁ° C °çravaṇa e° B °cchasi | adya° C °pi saṁmya°.

अथ कल्पसहस्राणि वशिभूतसहस्रकोटीननुचीर्णं ।
दृष्ट्वा तदा व्रजन्तं कालो शाक्योत्तममवोचत् ॥
मार्गेण येन गच्छसि द्विपदोत्तम अद्रुतं असंभीतं ।
अद्य जिनपारमिताये सर्वसत्वान चरितं बुध्यसि ॥
येन ते पुरिमा बुद्धा मृदुमार्गेण प्रस्थिता ।
तेन त्वं प्रणतो वीर अद्य बुद्धो भविष्यसि ॥
क्रकुच्छन्दो भगवां बुद्धो मुनि कोनाकसाह्वयो ।
काश्यपो भगवां बुद्धो भवां ष्येतेन प्रस्थितः ॥
येन गतो क्रकुच्छन्दो कोनाकमुनि च काश्यपो ।
एतेन त्वं गच्छ वीर अद्य बुद्धो भविष्यसि ॥
यथा तृणानि गृह्णासि यथा याचसि स्वस्तिकं ।
यथोपेसि महीमण्डं अद्य बुद्धो भविष्यसि ॥
यथा इमे शुद्धावासा वशीभूता करपुटाः ।
नमस्यन्ति तर्हि एषां सत्का[227a]रो शाक्यसुता समः ॥
पुरिमेहि यथा विमानं तेजेन स्फुटं सर्वशः ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च भवनं मह्यं अन्धकारतमिस्रकं ।
ओभासेन स्फुटं सर्वं अद्य बुद्धो भविष्यसि ॥
यथा च विमला नेत्राः विशुद्धा मम नायक ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च रणते पृथ्वी कंसपात्रीव ताडिता ।

1. BC °vaçibhù° C °koṭinì anupùrṇṇam̃ dṛi° B °koṭìm anucirṇṇam̃ dṛi°. — 2. BC °vocat mà°. — 3. BC °yena eva siddhipadottama(C °maḥ) | adru ° bhîtam̃ adya°. — 4. BC adya janikshayâya sarvasatvacaritàni bu°. — 5. C yema te° B °buddhyà mṛi ° sthità te°.

7. C °hvayaḥ | . — 8. C °gavàn buddho bhavàn petena prasthito | . — 9. C yenàgato kra ° muni kâçya°. — 10. BC çirì ca tena tvam̃° C °vìro adya°.

11. BC °gṛihnâti yathà vâca(C °vâvà)si sva°. — 13. C yathime° BC °puṭaiḥ | . — 14. BC °syanti(C °nti sa) tu hyeshâm̃° BC °satkaro° B °suta samaḥ | C °suta samo | . — 15. C yathà vimâna purimakehi teje° B purimakehi yathà ° sphuṭaki sarva° C °ṭam̃ ca tishṭhati sarvâṇo ni°.

16. C nismayam̃ vìro adya° B niḥçam̃sayam̃ mahàviraḥ adya° C °shyati | . — 17. B °bhavane ma° BC °kàratimâsakam̃ | . — 18. B obhâse ca sphu°. — 19. C °netri viçu° BC °yakaḥ | . — 20. BC niḥçam̃sayam̃° C °vìro adya°.

21. C °ḍitàḥ ni°.



IMPRIMERIE NATIONALE

निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च वाता वायन्ति यथा वृत्ता निरिंगिता ।
यथा द्विजा निकूजन्ति अद्य बुद्धो भविष्यसि ॥
यथा मेदिनी पुष्पेहि समंगिभूतमण्डिता ।
बुद्धानामेव उत्पादे एवं भोति अलंकृता ॥
यथा वाणशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा पक्षिशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा हंसशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा क्रौञ्चशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा मोरशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा जीवकशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा पूर्णकुम्भशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा कन्याशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
संमुखं पि च जिनपारमिताये

1. BC niḥçaṁsayaṁ° C °virah adya°. — 2. B yathâ vâto vâyanti° C °ca vâto vâyaṁnti° B °niliṁgitâ | C °niliṁgitâ | . — 3. C °dvijâ hi kûja° B °jâni kujanti°. — 4. BC °sarvâyaṁ bhûta°. — 5. C °nâm evam udâ evaṁ° B °evam utpâdâ evaṁ bho° C °kritâḥ | .

6. C °ronti tvâ pra°. — 7. BC niḥçaṁsayaṁ mahâvîro a°. — 8. C yathâ paṁtraçatâ° B °patraçatâ° C °nti tvâ pra° BC °ṇaṁ ni°. — 9. BC niḥçaṁsayaṁ mahâvîro(C °raḥ) adya° B °buddhaḥ bha°. — 10. C *passe les lignes* 10-13.

11. B niḥçaṁsayaṁ°. — 13. B niḥçaṁsayaṁ ° buddha bha°. — 14. C yathâ mauraça°. — 15. B niḥçaṁsayaṁ° B °viraḥ a° C °vîro a°.

16. C yathâ jivaṁjivaçatâ°. — 17. BC niḥçaṁsayaṁ° C °vîro adya°. — 18. C yathâ pûrṇṇaçatâ paṁ° C °nti tvâ pra°. — 19. BC niḥçaṁsayaṁ°. — 20. B °thâ kaṁcyaçatâ° C °thâ kaṁnyâ ° nti tvâ pra°.

21. BC niḥçaṁsayaṁ mahâviraḥ adya°. — 22. BC âmukhehi ca ji ° upagame° C °buddhe ni° BC °shadya sva°.

उपागमे पुरिमबुद्धनिषद्यां ।
स्वस्तिककाले स लोकप्रदीपः
उपाविशे महिरुहाग्रसमीपे ॥

अथ खलु कालो नागराजो बोधिसत्वं सिंहासनगतमभिस्तवे ॥

यथा मृदूहि जालेहि संस्तरित्वान संस्तरं ।
यथा पर्यंकमाभुंजसि अद्य बुद्धो भविष्यसि ॥
यथा वाणशता पंच करोन्ति त्वां प्रदक्षिणं ।
समीपे द्रुमराजस्य अद्य बुद्धो भविष्यसि ॥
त्वं पि नरवीर चरियां अद्य निषेवसि पूर्वं अनुचीर्णा ।
धक्ष्यसि त्वं शठसैन्यं सहय सनागरथ सपदातं ॥
यथा द्वात्रिंशती काये महापुरुषलक्षणा ।
निःसंशयं मारसैन्यं प्रभंजित्वा विरोचसि ॥
अद्य त्वं [227b] साश्रवं चित्तं किलेसमदसूदन ।
ज्ञानेनोत्पाटयित्वान बोधिं प्राप्य विमोक्ष्यसि ॥
अद्य ते सह धर्मेण प्रतिवक्ता न भेष्यति ।
इति कालो महानागः उरगाणां वरोत्तमः ।
हृष्टो प्रांजलिको आह अद्य बुद्धो भविष्यसि ॥

बोधिसत्वो कालं नागराजानं संरागेति ॥ एवमेतं महाकाल एवमेतं महानाग अद्याहं अनुत्तरां सम्यक्संबोधिमभिसंबुध्यिष्यं ॥

तं च कालमवचि द्विपदेन्द्रो
प्रीतिहर्षपरिवृंहितकायो ।

2. B svasti | kâlepa lo° C svastikâleya lo ° dîpo u° BC °upaviçe mahîru° C °mîpe ‖. — 4. B °stave ya°. — 5. C °mriduhi jâ° BC °tvâ namaskaritvâna(C °na mam̃)staram̃ ya°.

6. C °m âbhujasi a° B °jasi ‖ adya°. — 7. C °nti tvâ pra°. — 8. C çatadru° B samadru° BC °drumasya râ°. — 9. BC °naravîracaritâm̃ nishe° BC °pûrvvam anu° C °nuvistîrṇṇam̃ | B °rṇṇâm̃ dhakshasi°. — 10. B dhakshasi çaṭha° C drakshyasi çaṭha° BC °nyam̃ haya(C °hapa)râjaratham̃ sapa° B °tam̃ ya°.

11. B °tî ye kâye° C °tî hi kâye ma ° ṇâye niḥ° B °ṇâ niḥ°. — 12. B niḥçam̃sayam̃°. — 13. C °çravâ ci° BC °ttam̃ kleça° C °çamasudanam̃ | B °madaçûdanam̃ jñâ°. — 14. BC °nenotpâdayi ° tsyati ‖. — 15. BC °tivaktrâ na bhe°.

16. C °gaḥ turagâ varo°. — 17. B hrishtâm̃ prâm̃°. — 18[1]. B °satvam̃ kâlo nâgânam̃ sam̃° C °kâlo nâ° BC °sam̃râdhati°. — 18[2]. C °buddhishyam̃ |. — 20. BC tam̃ ca kâlo avaci dvipadendram̃ prî° C °rivṛihatikâyo ‖ B °vrim̃hatikâyo ‖.

अद्य काल वचनं तव सत्यं
अद्य स्पृशिष्य अनुत्तरबोधिं ॥
अपि महिधरा गिरिवरा न भवेया
चन्द्रमात्र गगणा प्रपतेया ।
नैवाहन्तत्र गतो न भवेयं
भोहि प्रीतिमनसो भुजगेन्द्र ॥
मेरुशृंग अनिलो विधमेया
मेदिनी च गगणं च समेया ।
मादृशा न हि सिंहासनश्रेष्ठं
उपगम्य अमृतं न स्पृशेन्तुः ॥
सो गिरां प्रमुंच तत्र निषण्णो
तिर्यं व द्रुमवरस्य समीपे ।
अद्य सर्वभवमूलमशेषं
ऊहनामि रजनीक्षयकाले ॥
स्तवित्व कालो संबुद्धं द्वात्रिंशवरलक्षणं ।
प्रदक्षिणं करित्वान तत्रैवान्तरहायिथ ॥

निषण्णो बोधिसत्वो पंच संज्ञा प्रतिलभे ॥ तद्यथा अतीतसंज्ञा क्षेमसंज्ञा सुखसंज्ञा अशक्यसंज्ञा ॥ इमां च पुनः परसंज्ञां प्रतिलभते ॥ अद्यमहमनुत्तरां सम्यक्संबोधिमभिसंबुद्धेष्यं [चत्वारि नीतयो तद्यथा साम दण्डो भेदो प्रदानो] ॥

अथ खलु मारो पापीमां येन बोधियष्टिस्तेनोपसंक्रमित्वा वैहायसे अन्तरीक्षे स्थितः प्रांजलीकृतः बोधिसत्वं नमस्यन्तो ॥ अथ खलु बोधिसत्वो मारं पापीमं इमाये गाथाये अभ्यभाषे ॥

1. C adya adya kà°. — 3. BC °mahidharâ giridharâ na bha ° ndramâtrâ gagaṇâ pra-(C °ṇân pra)pateyâ neva°. — 5. BC nevahan ta(B °haṁ ta)m agataṁ na bha° C °bhoti prîtimâna° BC °bhujaṁgendra meru°.

7. C °dhamemà medi° BC °dini ca ga°. — 9. BC yâdriçâ hi siṁhâsana(C °naṁ)çreshṭaṁ u ° çetsuḥ ‖.

11. C °pramukhaṁ ci tatra° BC °sharṇṇo tiryyaṁ vâ dru°. — 13. B °shaṁ uha° BC °rajaniksha ° le sta°. — 15. C stavilva kâ ° triṁçadvara° BC °ṇaṁ pra°.

16. BC °ntara nisha°. — 17[1]. C nisharṇṇo | ho° B nisharṇṇo bodhisatva paṁ°. — 17[2]. C °sukhaṁsaṁjñâ a°. — 18[1]. BC °saṁjñâ pra°. — 18[2]. B °budhyo(?)shyo catvâ° C °ddheshya·catvâ° B °thâ ‖ sâ° BC °dandomabhedopapradâno(C °nâ)‖. — 20. C °sthito prâṁjaliṁkrito bo° B °taḥ prâñjali°.

21. BC imâṁ gâ° C °ye asvabhâve ‖.

वैहायसे तिष्ठसि अन्तरीचे
वेगप्रमत्तो मृगमण्डलीव ।
नमस्यन्तो प्रांजलि वन्दमानो
तं वन्दनीयं इह त्वं नमस्यसि ॥
अहं वो ईश्वरो राजा विचेता सर्वप्राणिनां ।
सुखदुःखस्य विद्वांसो लोके पर्यायकोविदु ॥
याव ते यौवनं वीर आरोग्यं च महायश ।
भुंज मानुष्यका कामां पितुर्निवेशने वस ॥
महीं रम्यां आवसेहि स्फीतां उदधिमण्डलां ।
महायज्ञानि यजमानो राज्यं कारेहि गौतम ॥
अश्वमेधं पुरुषमेधं पुण्डरीकं निरर्गडं ।
एतां यज्ञां यजित्वान होहिसि अमरो मरु ॥
एतां [228ª] यज्ञा यजित्वान त्रायस्त्रिंशा सइन्द्रिका ।
मोदन्ति कामकानां. . . . . . . . . . . . . ॥
एवं त्वं हि मार्ष क्रुहि करोहि वचनं मम ।
मा आगामिके विहन्याहि हित्वा सांदृष्टिकं फलं ॥
इमां गाथां भणे मारो बोधिसत्वस्य सन्तिके ।
तथावादिनं च मारं बोधिसत्वो ध्यभाषति ॥
प्रमत्तबुद्धि पापीमं कस्य अर्थं इहागतः ।
नैव त्वं ईश्वरो राजा न ब्रह्मा न प्रजापतिः ॥

1. BC °yasam̃ tishṭha ° liva(C °vam̃) nama°. — 3. B namasyato prâm̃° C °jalim̃ vandamâ ° syati | . — 5. B °vo içva°.

6. BC sukhasya ca duḥkhasya ishâm̃ço(C °imâm̃ so) lo° C °lokaparyyayako° BC °du yâ°. — 7. B yâca te yau° C °vîram âro° BC °yaçam̃ bhum̃°. — 8. BC °ja manu° C °shyakâmâm̃° BC °pitur eva nive(C °vese)ne âvasehi(B °hi | ) ma°. — 9. BC °mahi ramyâm̃ sphî ° ṇḍalâ ma°. — 10. C °ni jajamâ° B °yajyamâ ° jyam̃ kâlehi gautamaḥ | C °gauttamaḥ | .

11. C açvamedham̃ puṇḍarîkam̃ samya*ktrâ*(??)nira° B °rikam̃ samya*kryâ*(?)sa nira°. — 12. C etam̃ yajñâ yaji° BC °hohati amarâ maru | (C °rum̃) e°. — 13. BC °tvânas traya ° ndrikâ mo°. — 14. BC °nâm̃ | . — 15. B gatam̃ tvam̃ ham̃ mâ° C gatâham̃ tvam̃ mâ ° nam̃ ma mâ â°.

16. BC °viham̃nyâ°. — 17. B °dhisatvasanti°. — 18. C tathâtathâvâ° BC °ditam̃ mâ° C °mâro bo ° tvo 'dhya°. — 19. BC °ttabaddha pâpîmam̃(C °me) svena artham̃m i(C °rtha i)hâ° C °gatâḥ nai°. — 20. C naivam̃ tvam̃ î ° pati | .

सच त्वमीश्वरो अस्या न मे याचेसि प्रांजलि ।
सुसमृद्धापि या जातिः हीनोत्कृष्टा च मध्यमा ।
तां नाहं अभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
सुसमृद्धा पि ये कामा हीनउत्कृष्टमध्यमा ।
ते प्यहं नाभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
ये पिमे पंच कामगुणा लोकस्य सुखसम्मता ।
ते प्यहं नाभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
नागो यथा पाशं भित्त्वा दारयित्वा च बन्धना ।
गच्छति येनकामो व. . . . . . . . . . . . . . . ॥
छित्त्वा गृहबन्धनानि गंसामि अहं पुरं वरं ।
अहो धर्ममुदीरयेन्तुः हृष्टप्रमुदिता नभे ॥

पुनर्मारो येन बोधियष्टिस्तेनोपसंक्रमित्वा उपरिवैहायसं अन्तरीक्षे अस्थासि ॥ बोधिसत्वो तं आह ॥ कस्त्वं ॥ मारो आह ॥

अहमीश्वरो मदकरो मरुमानुषाणां
मह्यं सुरासुरवरो विषयानुवासी ।
संसारपंजरगता मदनाभिभूता
कामातुरा मुच्यन्ति मृत्युपाशा ॥
तं वाचया मधुरया परमार्थदर्शी
मारं ब्रवीत महिमण्डगतो महर्षि ।
आकल्पकोटि कुशलौघसमन्वितस्य

1. BC °jalim̃ | . — 2. C °ddhâpi yâm̃ jâ ° no utkṛishṭamadhyamâḥ | B °tkṛishṭaç ca ma°. — 3. BC na câham abhi° B °mi napekshesmim̃ pi te pi hi || C °pekshasmim̃ te pi hi || nâgo°. C *donne ces vers dans l'ordre suivant :* 3, 8, 6, 7, 10; 4 *et* 5 *sont omis.* — 4. B °tkṛishṭhama°. — 5. B °pekshesmim̃ te pi hi | .

6. C ye ca ma °khasam̃matâḥ | . — 7. C tenâpya° BC °nâtinandâ° B °anupekshasmim̃ te pi hi | C °anupesmim̃ hi te pi hi | gaccha°. — 8. B °thâ pûtitvatâ dârayitvâ abandhatâ | gaccha° C °yathâ pûtitatvâ dârayitvâ ca bandhanâḥ | ye ca me°. — 9. BC gacchati yena kâmo eveva cchi(C °kâmenam̃ evam̃ cchi)tvâ gṛi°. — 10. BC cchitvâ gṛi° BC °nâni | gam̃° B °punavaram̃ aho° C °punar varam̃ aho°.

11. C °dharma u° ditâna labhe || . — 13[1]. BC °ha ka°. — 14. B °çvaro makaro maru° BC °ṇâm̃ mahyam̃ surâ ° shayam̃ nuvâsî sam̃°.

16. B °sârayam̃jaragata manobhi° C °gatâ manobhibhûtâḥ | kâmâm̃tulâ mucyantu mṛi° B °bhûtâ | kâmânturâ mucyata mṛi° BC °pâçâm̃ tam̃ vâ°. — 18. BC °rçi || mâ ° vîtum̃ mahi(C °hî)maṇḍa ° rshi yam̃ kalpa°. — 20. BC yam̃ kalpa ° tasya | vaca ° vasya ci°.

वचनं नरर्षभरुतं नरपुंगवस्य ॥
चित्तशूरो सि यदि तवेश्वरत्वं
कामेश्वरो सि यदि व्यक्तमनीश्वरो सि ।
कामातुरा हि स्त्रीणां मनुजेन्द्रगर्भ
पंके पतन्ति मणिरत्नविलम्बिचूडा ॥
तेषान्तथा निपतितान महीश्वराणां
पृष्ठे पतन्ति पुरुषाण स्त्रियो ललन्त्यः ।
ते कामरागमदवेगयुता हसन्ति
तस्मिं क्षणस्मिं प्रमदा यमदासभूता ॥
सो दासतामुपगतो प्रमदाजनस्य
ऐश्वर्यतां वदसि पश्य यथासि मूढो ।
कामातुरस्य हि न विद्यति ईश्वरत्वं
नाभू न चापि भविता इति निश्चितं मे ॥
सो हं तवाद्य सबलं युधि निर्जिनित्वा
अरुणोदये प्रतिभाते भविताස्मि बुद्धो ।
सिंहासनमनुगतो हि न कश्चि कृष्ण
उत्तिष्ठते चरमदे[228b]हगतो अबुद्धो ॥

मारो आह ॥

किं गर्जसे द्रुमवरस्मि सुखं निषण्णो
न हि ताव पश्यसिह योध्यसहस्रमालिं ।
सेनां पिशाचबकराक्षसयक्षसंघां

2. BC °çûrosmiṁ yadi asti tvaṁ î(C °i)çvaratvaṁ | kâme° C °vyaktaṁm aṇîçva° B °nîçvarâsi kâ°. — 4. BC °ndragatâ paṁ° C °ṇiratnaṁvi°.

6. BC °titâni mahî ° shâna stri°. — 8. B °kâmarâmada° C °kâmarâ*ga*(?)deve° BC °tasmiṁ kshaṇe pra°. — 10. BC so dâsyatâm upagato pramadâ yanantu dâsa(C °saçca) bhûtâ so dâsa(C °ta | sa dâsya)tâm upagatâ(C °to) pramadâ janasya ‖ ai° C °thâyathâsi mûhâ kâmâtu° B °thâsi sûdyâ kâmâtu°.

12. C °sya hîna vi ° tvaṁ ‖ nâbhûn na câ° B °tvaṁ ‖ nâbhûḥ na câpi bhanitâ i ° çcitâ me so° C °niççayâ me so°. — 14. B °nijinitvâ° BC °pratihate bhavitâsma bu°.

16. B °sanâm anu° C °sanâm arugahi na kaçcit kṛshṇaḥ u°. — 19. C °varasmiṁ sukhaṁ nisharṇṇo na hîna tâvat paçya siṁhayam adya saha° B °nisharṇṇe na hitâ ca paçya siṁha yodyasaha°.

21. C °çâçca râ° BC °yakshasaṁghâḥ catu° B °ginisenâṁ mudi° C °nîṁ ca senâṁ mudi° BC °ditâ bahumantramantrî(C °ntramantrâṁ) ‖ .

चतुरंगिनीं मुदितां बहुमन्त्रयन्त्रां ॥

बोधिसत्व आह ॥

यदि मारकोटिनयुतानि समागमेन्सुः
कुशलौघसंचयसंचितनरर्षभस्य ।
रोमं न इंजेय कुतो तुवं कृष्णबन्धु
प्रतिगच्छ किं विलपेसि निरर्थकेन ॥

मारो बोधिसत्वेन क्षिप्तो स्वकं भवनं गत्वा परिवारस्य आचिक्षति ॥ एषो मारिष बोधिसत्वो बोधिमण्डे निषण्णो अनुत्तरां सम्यक्संबोधिमभिसंबोधितुकामो । सो स्थानातो च्यावयितव्यः मा मम विषयातो बहुजनकायमतिक्रामयिष्यति ॥ तस्य दानि जनीसुतो नाम पुत्रो आह ॥ तात मा नं अन्तरायं करोहि अनुत्तराये सम्यक्संबोधये अभिसंबुध्यतु । यादृशं मे अधिगतं गर्भोक्रमणं च जातिं च अभिनिष्क्रमणं च यथा च बोधिमण्डे उपसंक्रम्य निषण्णो अद्यैष अनुत्तरां सम्यक्संबोधिं अभिसंबुद्धिष्यति । नास्ति सो सत्वो वा सत्वकायो वा बोधिसत्वस्य समर्थो अनुत्तरायै सम्यक्संबोधये अन्तरायं कर्तुं ॥

निषण्णो सिंहो यथ दुष्प्रधर्षो
ओभासयित्व दिशां वृक्षमूले ।
न चैतदस्माकं कदाचि रोचति
यं एवरूपं ऋषिमाक्रमेसि ॥
शीलेन क्षान्तीये तपेन चैव
उपेतो सर्वपरमां गतिं गतो ।

2. C °tvam àha ‖ . — 3. B yàdi° BC °yutàni.samàgametsuḥ ‖ ku° C °ghamaṁcayaṁci° BC °citasya nara°. — 5. B ràmaṁ na iccheye ku° C °iccheya ku° BC °to tava kṛi° C °bandhuḥ pra ° vilapitena nirartha° B °vilapatitena nirartha°.

7¹. C màro ca bo°. — 7². B °risho bo° BC °nisharṇno anu° C °bhisaṁbudhitukàmaḥ so sthà° B °mo so sthà°. — 9. B °to ‖ vyàvayitavyaḥ màṁ mama vi° C °tavyaṁ | màṁ mama vi ° yam abhinishkramishyati | B °yam abhikrà°. — 10¹. C °janasuto nà° B °janaṁ suto nà°. — 10². BC °rohi | anu° C °ttaràṁ saṁmyaksaṁbodhàye a° B °dhaye anantaràya kartuṁ (l. 14)°.

11. C °çaṁ me abhigarbhopakramena jàtiṁ ca a ° sharṇno | a°. — 13. BC °dhaye anan-taràya kartuṁ ‖ . — 15. BC nisharṇna siṁha(C °hà) ya° B °dhasho o° C °dharshyo o°.

17. B °kadà viro° C °dàcid virocati° BC °ya evarùpàṁ rishiṁ paràkrame°. — 19. BC cile ca kshàntiye ta° C °kshàntiṁ ye° B °tapena vaite upetà sa° C °caite upetà sa° B °tiṁ gatoḥ | .

सो एवरूपो समुच्छ्रितध्वजो
गजो यथा भेत्स्यति आत्मबन्धं ॥
पश्य तुवं सर्वद्विपादउत्तमं तं
चन्द्रो यथा विभाति पूर्णमास्ये ।
कथं हि चित्तं क्रमते अबुद्धि
यो एवरूपां लभते विहेठां ॥
अंगारकर्षू प्रपतेय न कोचि
आशीविषं पि स्पृशे नो करेण ।
जात्यन्धो त्रस्तो शुनखेहि पृष्ठे
सो अन्धकूपे प्रपते अचक्षुः ॥
एवं इमे भोन्ति परीत्तचेतसो
मन्त्रो च नो अस्ति तथाविधानां ।
ये एवरूपं परिशुद्धगोचरं तं
अश्रद्दधाना प्रपतन्ति अचक्षुषो ॥
सचेवं एतं वचनं न गृह्णथ
मार्गस्थ उन्मार्गगता स्मरिष्यथ ।
पलायमाना दिशता चतुर्दिशं
यथापि. . . . भ्रष्ट क्रोष्टुको ॥

कालो अमात्यो गाथां भाषति ॥

सर्वा सुकार्थस्मि समुच्छ्रितस्मिं
सम्मोहमासन्नो विसंज्ञबुद्धिः ।

1. B °rûpâ samu° C °rûpâm̃ samu° BC °bhetsati â° C °ânmabhâm̃janam̃ ‖ B °tmabhojanam̃ ‖. — 3. C paçyatvevam̃ sarvâdupâdânam utta° B sarvodupânam utta° BC °mam̃ candro° B °thâ ço *ca*(?)bhati pû° C °çobhati pû° BC °mâsiye |. — 5. BC °buddhino yo e° C °evam̃rû°.

7. B °karshû pra° C °karshu pra° BC °teya so na koci° C °cid âsid visham̃° B °âçiviçam̃shi spṛi° BC °çe so kareṇa ‖. — 9. B °tyandha tra° C °tyandha çrasto° BC °pṛishṭhato so° B °so ndhakû ° pate cakshuko ° ‖ C °teya cakshusho |.

11. B °paritacetaso cedam atra nânâsti ta° C °ritacetaso vadâ ca mam̃trâ tathâ nâsti vidhâ°. — 13. C ye caivam̃ rû° B ye rûpam̃ evam̃ pa° BC °ram̃ açadda° B °kshushâ ‖. — 15. C sacaivam e° B °gṛihnatha mârgastha umârgaga° C °gṛihnatha mârgam̃stha upamârgagatâ smarim̃shyatha ‖. — 17. C °mâno di° BC °thâpi bhrashṭam̃ kro(B °ko)shṭukâ kâlo°. — 19. C °gâthâ bhâ°. — 20. C sarve svakârthesmim̃ sammo° B sarve svakârthesmi samucchritesmim̃ sammo° C °ham ânnabhamanyu buddhiḥ ‖ B °m âsannabhasanyabuddhiḥ ‖.

यथा अयं देव असंप्रतीतो
मतिं अयुक्तां कुरुते जनीसुतः ॥

ततो मारो महासन्नाहं सन्नहित्वा आगतो बोधिसत्वसमीपं ॥ बोधिसत्वेन च उक्कासितशब्देन भग्नो ॥ पुनः मारो महासन्नाहं सन्नहित्वा बोधिमण्डे बोधिसत्वसमीपमा[229a]गतः महतीये चतुरंगिनीये सेनाये कुम्भाण्डयक्षराक्षसवतीये ॥ समन्ता त्रिंशद्योजनां स्फुरित्वा हयसहस्रयुक्तवाहनं अभिरुहि चित्रचापधरो सन्नद्धकवचितो उच्छ्रितध्वजपताकः अनेकभेरीमृदंगमरुपटहपणवशंखसंनिनादेन किलिकिलप्रक्ष्वेडितशब्दानि प्रमुंचमानाये भैरवाये विकृताये भूतगणसेनाये संपरिवृतो ॥ तद्यथा ॥ अन्ये अश्वमुखा अन्ये उष्ट्रमुखा अन्ये गर्दभमुखा अन्ये अजमुखा अन्ये मेण्डमुखा अन्ये मृगमुखा अन्ये सिंहमुखा अन्ये व्याघ्रमुखा अन्ये द्वीपिमुखा अन्ये ऋक्षमुखा अन्ये श्वानमुखा अन्ये सूकरमुखा अन्ये विडालमुखा अन्ये काकमुखा अन्ये कुक्कुटमुखा अन्ये गृध्रमुखा अन्ये कुररमुखा अन्ये अशीर्षका कबन्धा अन्ये एकशिरा अन्ये बहुशिरा अन्ये द्विशिरा अन्ये अचक्षुषो अन्ये चैकचक्षुषो अन्ये अहस्तका अन्ये अपादका अन्ये अबाहुका अन्ये दशबाहुका अन्ये असिधरा अन्ये शक्तिधरा अन्ये तोमरधरा अन्ये भिण्डिपालधरा अन्ये शूलधरा अन्ये त्रिशूलधरा अन्ये हलधरा अन्ये चक्रधरा अन्ये मुशलधरा अन्ये मुद्गरधरा अन्ये परशुधरा अन्ये खड्गधरा अन्ये करंकधरा । अन्ये मुखतो ऽग्निं वमन्ति अन्ये सर्पां वमन्ति अन्ये क्षुरपर्यन्ता चक्रानुपरि अन्तरीक्षे भ्रामयन्ति ॥ अन्ये पादेन हस्तिनागं गृह्य बोधिसत्वं अभि-

1. B yathâyam̃° C °to smṛitim̃ ayu°. — 3[1]. B °mâro sannâha mahâ sannahi° C °nnâha sannahitvâ âga bo°. — 3[2]. B °satvona ca u° C °sitaçitaça° BC °bhagnoḥ ‖ . — 4. C °ro sannâ° BC °nnâha sanna° C °gato mahatim̃ catu° B °hatî catu° C °senâya ku ° râkshasasannipatiye B °râkshasapatiye ‖ . — 5. C °nâm̃ sphari ° tâka anakaiḥ bhe° B °anekaiḥ bhe° C °ṇavasam̃kha° BC °likilâ prakshve ° mum̃camâni(C °mânâni | ) bhairavâyam̃ vikṛitâyam̃ bhû°.

9. C anyo açva ° nye gardattamukhâ anye jâmukhâ anye maṇṭhamukhâ anye mṛi° B °nye gadarbhamukhâ anye ajâmukhâ anye maṇṭhamukhâ anye mṛi° C °nye mim̃ha° BC °çvânamukhâ anye çûkaramu(C °mû)khâ anye vi° C °gṛidhramukhâ anye kularamukhâ anye açirshakâ anye kabandhakâ anye ekaçilâ anye dviçirâ anye bahuçirâ anye cakshushâ anye cai° B °abandha anye ekaçirâ anye bahuçilâ anye acakshusho anye dviçirâ anye cai ° nye abâhukâ anye subâhukâ ‖ anye açidharâ anye çakti° C °daçabâhukâ ‖ anye asidharâ anye dhanudharâḥ anye çaktidha ° dharâḥ anye bhindipâradha ° dharâḥ anye tri ° dharâḥ anye hadharâḥ a ° nye mûçala ° dharâḥ anye pa° B °dgaradharâ ‖ anye pa° B °ḍgadharâ anye karam̃karâ anye mukha° C °ḍgadharâ anye kalam̃dharâḥ anye mukha°.

17. B °nye ksharapa° C °nye ksharaparyyantaç cakrâm̃ upari° B °bhrâmanti ‖ . — 18. BC °pâdam̃ hasti°.

द्रवन्ति । अन्ये उष्ट्रं गृह्य अन्ये अश्वं गृह्य अन्ये गर्दभं गृह्य अन्ये कबन्धं गृह्य अन्ये करंकां गृह्य अन्ये आशीविषं गृह्य अन्ये सिंहां गृह्य अन्ये व्याघ्रां गृह्य अन्ये द्वीपीं गृह्य अन्ये ऋक्षां गृह्य अन्ये गवयां गृह्य अन्ये महिषां गृह्य अन्ये शीर्षकरोटीं गृह्य अन्ये पर्वतकूटानि गृह्य अन्ये समूलानि वृक्षाणि गृह्य । अन्ये अन्तरीक्षा च अंगारवर्षं पातयन्ति अन्ये आशीविषवर्षाणि पातेन्ति अन्ये उपलवर्षाणि पातेन्ति । अन्ये हस्तिषु अभिरूढा अन्ये अश्वेषु अन्ये उष्ट्रेषु अन्ये महिषेषु अन्ये गर्दभेषु अन्ये गवयेषु अन्ये मृगेषु अन्ये सूकरेषु अभिरूढा बोधिसत्वमभिद्रवन्ति ॥ नापि बोधिसत्वस्य रोमस्यापि इञ्जित[229b]त्वं चित्तस्य वा अन्यथात्वं ॥

अथ स सगवयाश्वरथो खे बहुहयवारणयुक्तां सेनां ।
अभिनिर्मिणीयभियासि येन बोधिसत्वासनं श्रेष्ठं ॥
सो हयसहस्रयुक्तं वाहनमभिरुह्य चित्रचापधरो ।
वाचामुग्रामुदीरये हनथ हनथ गृह्णथ नं शीघ्रं ॥
कुंजरखराश्ववदना उष्ट्रमुखा मुषलपाणिनो रौद्रा ।
राक्षसगणा प्रतिभयं भ्रमन्ति यतो सौ अरिनिघाती ॥
अपराणि कबन्धानि आशीविषकानि रुहन्ति मेदिन्यां ।
इमं हनथ इमं गृह्णथ रवन्ति आर्त्तस्वरं घोरं ॥
अपरे मुखतो सर्पानग्निं विषं च वमन्ति. . . ।
पादेन गृह्य गजेन्द्रमभिद्रवन्ति पिशाचगणाः ॥

1. B anye drashṭuṁ gṛi ° nye gadarbhaṁ gṛi° C °gardavaṁ gṛi ° raṁkâ gṛi ° nye siṁhaṁ gṛi ° nye vyâghraṁ gri° BC °dvîpiṁ gri° C °gavayâṁ gṛihyaṁ anye ma ° nye çîrshaṁ karoti gṛi° B °rshakaroṭiṁ gṛi° C °parvataçṛiṁgâni gṛi° BC °vṛikshâni gṛihya anye anta°. — 4. C °rikshâṁ ca aṁ° BC °aṁgâravarshâ pâtaya° C °shavarshâṇi pâṭayanti | anye uparavarshâṇi pâṭayanti ‖. — 5. C °hisheshu a garda° B °sheshu anye gadarbheshu a° C °nye çûkare°.

7. BC °syâpi iñjatatvaṁ ci° B °nyatatvaṁ *corrigé en* °thâtvaṁ ‖. — 9. BC atha sarvo saga° B °khe | ba° BC °hujanahaya ° nâṁ abhi°. — 10. B °ṇîya abhiyâçi ye° C °ṇîya abhiyâsi | bodhi ° sanâ çreshṭaṁ so° B °tvâsanaçreshṭaṁ so°.

11. BC °dharo vâ°. — 12. C vâcam arugrâ ° dîraye natha ha ° tha gṛihnatha çî° B °gṛihnatha gṛihnatha na çî° BC °ghraṁ kuṁ°. — 13. BC °kharâcavada° B °danâ drashṭumukhâ° C °ṇinâ rau° BC °drâ râ°. — 14. BC °nti | ya° B °ariṇighâtighâti apa° C °arinirghâti apa°. — 15. BC °kâni lu(C °lû)ha ° diniyaṁ ‖.

16. B imaṁ gṛi°. — 17. BC apare ca sarppân a° B °nti te jaṁ pâ° C °nti | te jaṁ pâ°. — 18. B pâde gṛi° C pâdaṁ gṛi ° bhiṭhamanti piçâçcagaṇâ parva° B °bhivanti pi ° ṇâḥ parva°.

पर्वतशृंगानपर उग्गिरमाना अभिद्रवन्ति मुनिं ।
अंगारवर्षमपरे वर्षन्ति नभे पिशाचगणाः ॥
क्षुरपर्यन्ता अपरे भ्रमेन्ति चक्राणि अन्तरीक्षगता ।
गगणे च चटचटायति असनिर्घोरां करोति शब्दां ॥

अथ खलु बोधिसत्वेन त्रिष्कृत्यो शिरं परामृष्य त्रिष्कृत्यो पर्यंकं परामृष्य दक्षिणेन हस्तरतनेन सुविचित्रराजिकेन लाक्षारसप्रसेकवर्णेन मृदुना तूलसंस्पर्शोपमेन ताम्रनखेन अनेककल्पकोटीकुशलमूलसमन्वागतेन पृथिवी संपराहता प्रनदे गम्भीरं सूक्ष्मरूपं अनुनदे अनुरणे । सद्यथापि नाम मागधिका कंसपात्री पर्वतशृंगे संपराहता गम्भीररूपं अनुनदे अनुरणे एवमेव बोधिसत्वेन दक्षिणेन हस्तरतनेन ताम्रनखेन सुविचित्रराजिकेन लाक्षारसप्रसेकवर्णेन मृदुना तूलसंस्पर्शोपमेन अनेककल्पकोटीकुशलमूलसमन्वागतेन पृथिवी पराहता तेन च पृथिवीशब्देन भिज्जे लुज्जे प्रलुज्जे परिणमे ॥ हस्तिनो पि सानं सीदेन्सुः अश्वा पि सानं सीदेन्सुः रथा पि सानं सीदेन्सुः पादा पि सानं सीदेन्सुः हस्ता पि सानं सीदेन्सुः प्रहरणा पि प्रपतेन्सुः दिशा पि सानं उज्झ्येन्सुः अतीर्थेनापि नदीं नैरंजनां प्रपतेन्सुः । अन्ये वामेन पार्श्वेन प्रपतेन्सुः अन्ये दक्षिणेन पार्श्वेन प्रपतेन्सुः अन्ये उत्तानका प्रपतेन्सुः अन्ये पादेहि प्रपतेन्सुः अन्ये जानुकेहि प्रपतेन्सुः अन्ये ओमूर्धका प्रपतेन्सुः अन्ये अवकु[230a]ब्जका प्रपतेन्सुः भीता त्रस्ता परस्परमुत्क्रोशमाना ॥

सो करेण मृदुतूलुपमेन
आहनेय धरणीं द्विपदेन्द्रो ।

1. B °çriṁgán a(?)pare uggurumâ° C °udgurumâ°. — 2. BC °ṇâḥ kshu°. — 3. BC °ntà ca bhrâma(C °maya)nti° BC °gatà gagaṇe°. — 4. B °ṇe va caṭa° BC °ṭacaṭayati asa(C °aça)ni ghorâṁ°. — 5. BC °tvena trishkṛito çi° B °mṛishà tri° C °shya tṛishkṛito paryaṁka parâ° B °ryaṁka parà° BC °mṛiduṇâ stûlasaṁspa° B °vi samparohate pranade gambhi° C °hatà praṇate gambhirasû°.

8. C sadyathâ° BC °mbhiryyarû° C °paṁ anuraṇe ‖ e° B °ṇe ‖ evam e° C °m evaṁ bo° prasavakavarṇṇe° B °sekavakavarṇṇe° BC °dunâ stùlasaṁspa° C °nvàgatena pṛithiviçabde° BC °bdena bhojje lujje pra ° ṇame ha°.

12. BC °sìdetsuḥ açvà pi sànaṁ(C °naṁ si)detsuḥ ra(C ° | ra)thâ ° detsuḥ(C °tsuḥ | ) pâ ° detsuḥ | hastehi sâ(C ° hi mà)naṁ sidetsuḥ praha ° tetsuḥ dì ° naṁ ujyetsuḥ | (C °jyatsuḥ) atirthenâpi nadì nairaṁjanà prapatetsuḥ | . — 14. C °vâmeṇa pàrçve° BC °tetsuḥ anye da ° tetsuḥ anye u ° tetsuḥ a° B °nye hiyekehi prapatetsuḥ anye jà° C °nye kecit pàdehi prapatetsuḥ anye hi jânukehi prapatesuḥ a° B °tetsuḥ anye o° C °mûrddhe pra° BC °tetsuḥ anye ava ° tetsuḥ(B °tsuḥ ‖ ) bhi° B °utkoça° C °mânâḥ so°.

18. BC °mṛidu(C °duṇâ) tûlapâṇinâ âha ° ndro ka°.

कम्पे मेदिनी ससागरशैला
तेन भग्ना च चमुः नमुचिस्य ॥
सो च जहे तदा बोधिसमीपं
बोधिसत्वतेजेन ते चरन्तो ।
अनेकतुरगवारणयोधा
वगाढा नैरंजनां नाम तीर्थं ॥
पतितमथिताश्वरथशस्त्रः
मारो सराक्षसगणो दिशां च ।
अप्रजानन्तो नैरंजननाम
प्रत्योतीर्णो विगतशस्त्रो तीर्थं ॥
योजनसहस्रमात्रं पलाना
ऋद्धिबलेन रक्षसेना त्रस्ता ।
तथापि नो चाभया प्रकंपन्ति
जीवाथ दिष्ट्या स्म संशयमुक्ता ॥
अन्ये रक्षगणाः कण्ठावलग्ना
प्ररोदन्ति च मन्दारवां च ।
देवा प्रवर्षन्तु कर्कारवां च
हृष्टमना वाचमुदीरयन्ति ॥
विजयो पार्थिवस्य गगणे च
दुन्दुभिशब्दो हिक्कारनदो च ।

1. BC kampeya medinim̃ sasâ° B °çailâ | te° BC °tena bhagna camuḥ(C °mum̃) namucisya so°. — 3. C so ca prajahe tadâ bodhisatvasami° BC °jena nâma te caratha | . — 5. C °turañgavâ° BC °raṇavarabhûta yothayadâtâm̃(C °tân) nairam̃janà nâ(C °no)ma tîrthe pra°.

7. BC prapatitama° B °thito çvara° C °thitâ 'çvara° BC °çastrâḥ | mâ° B °çâm̃ ca a-apra° C °çâm̃ ca vidiçâm̃ ca apra°. — 9. B °tîrthe pratyuti° C °tîrthe pratyuttîrṇno° BC °stro yo°.

11. C °srapramâ° BC °mâtum̃ palâni ṛi ° sna çighreṇa râkshasase° B °stâ tathâ°. — 13. B °prakapanti divyâ ji° C °pratapanti divyâm̃ ji° BC °jîvatha dṛishṭvâsma sam̃cayâ muktâ(C °ktaḥ) anye°. — 15. BC anyena râkshasagaṇâḥ kaṇṭholagnâ prarodanti | mandâravâñ ca de°.

17. B devâm̃ pra° C devîm̃ ca pra° BC °varshi karkâ ° shṭamanâ(C °no) vâcâm u°. — 19. BC vijayo vijayo(C °ya) pâ° B °rthikasya gagane ca dundubhinam̃ çabdo° B °ranaditun̄ ca nabhe° C °nadi bhum̃jañ ca ra nabhe°.

निर्नदे त्रैलोक्ये प्रविधुतं च
नभं विमलं शास्तु विजयस्मिं ॥

देवपुत्रो देवलोकं गत्वा आह ॥

यो सौ भावो सत्पुरुषोत्तमस्य
नैरंजनातीरमुपागतस्य ।
न शक्यं तद्वर्षशतेहि वक्तुं
प्रदेशमात्रं परिकीर्तयिष्यं ॥
दृष्टो मे जाम्बूनदकाञ्चनाभो
व्योमप्रभो लक्षणचित्रगात्रो ।
संप्रस्थितो एकचरो अभूषि
नैरञ्जना याव च बोधिमण्डो ॥
सो ते क्रमां पद्मदलप्रकाशां
यथा यथा निक्षिपते महीयं ।
तथा तथा कम्पति साभिरामा
अनेकघोषाभिरता वसुन्धरा ॥
दृष्टा मे मारस्य चमू समागता
समन्ततो यक्षसहस्रकोट्यो ।
करोति त्रासं हृदयं प्रकम्पे
न सत्वसारस्य करोन्ति इञ्जनां ॥
न चास्य भावं पृथिवीय ज्ञायते
समन्ततो देवसहस्रकोटियो ।
घोषं उदीरयन्ति भविष्यते जिनो

1. B nabhe vailokye pâvidhûtam̃ na tam̃ bhavimala çâstu vijaye ‖ C nabhe vailâkyayâm̃ vidhutâm̃ nabham̃ vimala çâstu vijayam̃ ‖ . — 3. BC °putram̃ devalo°. — 4. BC °sau bhayâsi(C °si) satpu°.

6. C °deçe mâtram̃°. — 8. B drishṭvo me jâmbunada° C drishṭvo ma jâ° B °ñcanâbhâ vyo° BC °prabhâ la° C °ṇavici°. — 10. B °ekaravo abhû° C °ekaravâ abhû ° yâvacca bo° BC °dhimaṇḍe ‖ .

12. B °hîpam̃ | . — 14. B °sâbhirâtâ ane° BC °ghoshâm̃ bhirato(C °tâ) vasundharâm̃ ‖ .

16. B drishtyâ me° C drishṭvâ me maurasya casu samâgatâḥ samu ° hasraiko° BC °koṭiyo | ° — 18. BC °mpe ye na satva° C °roti i° BC °ñjanâ | . — 20. B °koṭiyo gho°.

22. BC ghosham udî° B °diyanti bha ° no ‖ prabṛi° BC °hṛishṭa vastrâ° C °yetsuḥ | B °yetsuḥ dṛi°.

प्रहृष्टा वस्त्राणि च भ्रामयेन्सुः ॥
दृष्टा मे पंचशता जीवजीवका
मयूरहंसा करविंककोकिला ।
संप्रस्थितेनैकरवा अभूषि
नैरंजना याव च बोधिमण्डं ॥
दृष्टो मे मार्गो अमरेहि निर्मितो
नैरंजना याव च बोधिमण्डं ।
धूपस्य च पुष्पस्य च माल्यस्य
विचित्रपुष्पो सुमनोज्ञगन्धो ॥
भग्ने मारे सर्वशो हततेजे
पूर्वे यामे परिशोधये चक्षुं ।
मध्यमे च यामे मारनिघाती
पूर्वनिवासचरिता स्मरेसि ॥
उद्गते च अरुणे वरबुद्धिं
[230b]यत्तकां पुरिमबुद्धानुबुद्धां ।
बुद्धधर्मवशिता प्रापुणेसि
लोकनाथो भवरागनिघाती ॥

रात्र्या पश्चिमे यामे अरुणोद्घाटसमये नन्दीमुखायां रजन्यां यत्किञ्चित्पुरुषेण सत्पुरुषेण महापुरुषेण पुरुषर्षभेन पुरुषद्रव्येन पुरुषवीरेण पुरुषनागेन पुरुषसिंहेन पुरुषनृपेण पुरुषपदुमेन पुरुषकुमुदेन पुरुषपुण्डरीकेन पुरुषपुंगवेन पुरुषाजानेयेन पुरुषधौरेयेण अनुत्तरेण पुरुषदम्यसारथिना विक्रान्तेन पराक्रान्तेन एकेन अप्र-

2. BC drishṭvâ me pam̃° C °tâ jîvam̃jîvakam̃ mayû° B °tâ jîvajîvaka mayû° BC °kilâ sam̃°. — 4. BC °shi ‖ nai ° nâ yâvad bodhimaṇḍam̃ dṛi°.

6. C drishṭvâ me mâ° B °janâ vacca bo° C °yâvacca bo°. — 10. C bhagno mâre sarvera hata° B °mâre sarvare hata° BC °je purime pari° C °çobhate cakshum̃ | .

12. BC madhyame yâ° B °nirghâṭi pû° C °niryâṭî pû° BC °ritâni sma°. — 14. B ûhare ca a° C ûhate ca aruṇavara° BC °rabuddhiḥ yattakam̃ purimam̃ buddhânubuddham̃ | .

16. BC °vaçitâni prâpuṇe lo ° ganirghâti ‖ . — 18. BC °yat kiñcin purushena satpu ° sim̃hena purushaṛishabhena purushanṛipeṇa purushapadu(B °pada)me° C °ṇḍarikena purushakumudena purushapuṅgavena purushajâlena purushadhaureṇa anu° B °ṇḍarîkena purushapuṅgavena purushajânayena purushadhaurayeṇa ‖ anu ° ttena ‖ âtâ° BC °pitâ vya° B °ntena | gati° C °prajñâmantenu arthikena sarvatrâjñâtavyam̃ prâptavyam̃ abhisambodhavyam̃ sarvatram eka° B °ço sarvatra vajñâtavyam̃ bo ° ddhavyam̃ | sarvatram eka° C °kshaṇasamyakayu° BC °anuttarâ sa(C °sam̃)myaksam̃buddham abhi°.

मन्तेन आतापिना व्यपकृष्टेन प्रहितात्मेन विहरन्तेन गतिमता स्मृतिमता धृतिमता बुद्धिमता प्रज्ञावन्तेन अर्थिकेन च्छन्दिकेन सर्वशो सर्वत्र यज्ज्ञातव्यं बोद्धव्यं अभिसंबोद्धव्यं सर्वं तमेकचित्तक्षणसमायुक्तया प्रज्ञया अनुत्तरां सम्यक्संबोधिमभिसंबुद्धः ॥ देवपुत्रा गन्धमाल्यं गृह्य स्थिता किन्तु खलु भगवतो चित्तं विमुक्तं ॥ भगवांस्तासां देवतानां चित्तेन चित्तमाज्ञाय ताये वेलाये तासां देवतानां इमं कांक्षाच्छेदनं उदानं भाषति ॥ छित्वा तृष्णां विजहामि रजं शुष्काश्रवाणि न स्रवन्ति छिन्नं वर्त्म न वर्तति । एषैव अन्तो दुःखस्य ॥

अथ नानावर्णा कुसुमओघा
निपतेन्सुः सुविचित्रसुगन्धा ।
देवपुत्रकरतलविमुक्ता
देवराजमभिदक्षिणियेन्सुः ॥
यस्य वीर्यं गिरिसारमतुल्यं
यो सदा कुलातितेज सिखीव ।
तस्य देवमनुजोपचितस्य
अंजलिं कुरुथ अप्रतिमस्य ॥
यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य कांक्षा व्यपनेन्ति सर्वा
यदा प्रजानाति सहेतुधर्मा ॥

अयं अनुलोमो प्रतीत्यसमुत्पादः ॥

4[1]. C °sthitâḥ | kiṁ tu kha°. — 4[2]. C °gavân taṁsâṁ° BC °devânâṁ ci ° lâye tânaṁ devatânaṁ i° C °kshâ âcchâdaraṁ u° B °kshâcchâdanaṁ° BC °dâraṁ bhâ°.

6. BC cchitvâ tri ° jahesi rajaṁ° B °shkâçatâni na mravanti° C °shkâçatâni câçnuvanti cchi° B °nnaṁ vatsaṁ na varṇṇuti | C °na varṇṇaṁti e°. — 7. C eshaivaṁ a° B °va ato duḥ°. — 8. BC °kusumaughâ° B °ghâ te patetsuḥ ‖ suviçitasugandhyâ de° C °ghâ tapetetsuḥ sucitasuga°. — 10. B °kshiṇetsuh ‖ C °kshiṇiyetsuh | .

12. B °vîryya gi° C °vîryya girisâgarasya atu° BC °khi ca tasya°. — 14. C °jomaci° BC °tha ‖ apra ° sya yadâ°.

16. C °nti sharmo â° B °dharmmo âtâpino dhyayato brâhmanasya ‖ . — 18. C arthasya kâṁ ° panayanti sarvâkshayaṁ yadâ° B °pananti sarvâṁ yadâ° BC °dâ aprajânâti | sahetudharmâ yaṁ a°. — 20. BC yaṁ anu° C °nuroma pratîtyesamutpâdo ya° B °tpâdo ‖ .

यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य कांक्षा व्यपनेन्ति सर्वा
क्षयं प्रत्ययानां अवैति ॥

अयं प्रतिलोमः प्रतीत्यसमुत्पादः ॥

मारेण पापीमता प्राणका निर्मिता भगवतो पर्यंकं भिन्दन्ति । सूर्येण उदेन्तेन सर्वे विलीना ॥

अथ खलु भगवान्ताये वेलाये इमं उदानमुदानये ॥

यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
विधर्षिता तिष्ठति मारसै[231a]न्या
सूर्येणेव ओभासितमन्तरीक्षं ॥

अथ खलु भगवान्प्रथमसंबोधिप्राप्तो ताये वेलाये इममुदानमुदानये ॥

सुखो विपाको पुण्यानां अभिप्रायस्य ऋध्यति ।
क्षिप्रं च परमां शान्तिं निर्वृतिं चाधिगच्छति ॥
पुरतो ये उपसर्गा देवता मारकायिका ।
अन्तरायं न शक्नोन्ति कृतपुण्यस्य कर्तुं वै ॥
ये भोन्ति अल्पपुण्यस्य विग्रहा ते न भवन्ति बलवन्तो ।
बलवां भोति समाधी संभारवतां सपुण्यवतां ॥
यदि यो च देवलोके अथ वा वसवर्तिनो मनुष्यो वा ।

1. C yathâ ime° B °dharma otâpinâ dhyâyato dhyâyataḥ brâ° C °dharma âgatâpino brâ° BC °sya a°. — 3. B arthâsya kâm̃° C arthasya kâksho vâpanayanti° B °nti sarvâm̃ ksha° BC °pratyânam̃(C °nâm̃) a° B °acaiti ‖. — 5. C °tiromaḥ prati ° tpâdo mâ° B °daḥ mâ°.

6[1]. C °ṇakâm̃ ni° BC °rmito bha ° ndati | . — 6[2]. B sûryena u ° rve vinilâ ‖ C °udayantena sarvam̃ vilînâ | . — 8. BC °m udânaye yadâ°. — 9. BC °nti ‖ dha ° ṇasya vi°.

11. B sûryeṇaiva obhâsasi ‖ tâm̃ antarîksham̃ atha° C °ryeṇaivam̃ ohhâsitâ antariksho atha°. — 13. BC °prathamam̃ sambodhiprâptam̃ tâ ° mam udânaya(B °ye) su°. — 14. B °yaç ca ridhyâti kshi° C °ṛidhyâti kshi°. — 15. B °mâm̃ çâm̃ nirvṛiti câ° C °rvṛiti bodhiga°.

16. C °to me upa° BC °yikâ anta°. — 17. BC °knoti kṛi°. — 18. BC °te na bhonti puṇyavanto balavâm̃°. — 19. C balavâ bho° BC °bhonti samâdhim̃ sam̃°. — 20. BC yadi ye ca de° B °nushye akṛi° C °nushye | akṛi°.

अकृत्यं प्रार्थयते किंचि तथा तथ न ऋध्यते तस्य ॥
अथ वा पुन प्रार्थयति निर्वाणं अच्युतं पदमशोकं ।
मार्गं दुःखप्रशमनं प्रतिलभते अल्पकिसरेण ॥

अथ खलु भगवानाह ॥ लोकविजितं नाम समाधि समापद्यते ॥ अयं लोकः सन्तापजातो स्पर्शोपरतो रागं वेदेति आत्मनो । येन येन हि मन्यन्ति ततो न भवति अन्यथा । भवे अयं लोको सक्तो भवे रक्तो भवाभिनन्दितो ॥ भवो यत्र भवति दुःखं भवति ॥ प्रहाणार्थं खलु पुनर्भिक्षवस्तथागतेन ब्रह्मचर्यं उप्यति ॥ ये हि केचि भवेन भवस्य निःशरणमाहुः सर्वे ते भवा अनिःशरणा ति वदेमि । ये वा पुनः केचिद्भिक्षवो भवेन भवस्य विप्रमोक्षमाहुः सर्वे ते भवा अविमुक्ता ति वदेमि ॥ उपधिं प्रतीत्य दुःखस्य संभवो सर्वोपधिक्षयतो भिक्षवो नास्ति दुःखस्य संभवो ॥ लोकमिमं पश्य पृथुं अविद्यापरीत्तं भूतं भूतसंभवा अपरिमुक्तं ॥ ये केचिद्भवा सर्वे हि सर्वत्रताये संवर्तन्ति । सर्वे ते भवा अनित्या दुःखधर्माः परिणामधर्माः ॥ एवमेतं यथाभूतं सम्यक्प्रज्ञया पश्यते ॥ क्षीयति भवतृष्णा भवं नाभिनन्दति सर्वशो तृष्णाक्षयो निर्वाणं ॥ तस्य निर्वृतस्य भिक्षवः पुनर्भवो न भवति ॥ अभिभूतो मारो विजितसंग्रामो निर्जिताः शत्रवः अपत्यक्तः सर्वभवो इति ॥

भगवान् सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थमभिसंभावयित्वा बोधिमूले उक्काशनशब्देन मारो पापीमां सबलो सवाहनो भग्नो ॥ अनुत्तरां सम्यक्संबोधिमभि-

1. BC akrita prâ° B °yate tathâ karishyate tasya || C °yate tathâ tathâ ridhya°. — 2. BC °punaḥ prâ° B °rvâṇa acyu° BC °padaṁ açokaṁ mârgaṁ°. — 3. BC °duḥkhaṁ prasavanaṁ prati° C °kiçaleṇa ||. — $4^{1}$. C °gavân mahâlo°. — $4^{2}$. B °nâma samâpa° C °nâma samâdhiṁ samâpa°. — $4^{3}$. BC alaṁ lo° rço 'parato râgaṁ vadati | âtmano yena ye°. — 5. BC °hi manyanti° C °to taṁ bha° B °to naṁ bha° BC °thâ bhave°.

$6^{1}$. BC °loko çakto bhave rakto bhavâhi nandi taṁ bha°. — $6^{2}$. C bhave ya° BC °ḥkhaṁ bhavati pra°. — $7^{1}$. BC °rthaṁ || kha° C °kshavaḥ tathâ°. — $7^{2}$. BC °keri bhave(C °va)na kasya niḥça(C °ḥsa)raṇa ° rve te bhavâ(C °vân) | aniḥsaraṇâ ° mi ye°. — 8. C °punar kaṁcid bhikshavaḥ abhave° C °kshavo 'bhavena° BC °huḥ | sarve° BC °bhavâ(C °vân) abhimuktâ°. — 10. BC upadhi pra° B °sarvaçopâdhi° C °sarvaçopadhi° BC °sya sambhavo lo°.

$11^{1}$. BC °prithu avi° B °taṁ bhûtarambha°. — $11^{2}$. BC °d bhave sarve ° rttati | . — 12. BC ye sarve° C °bhavâṁ ani° B °ṇâmadharmâḥ c°. — $13^{1}$. B etam etaṁ ya° C °bhûtaṁ saṁmya°. — $13^{2}$. BC °trishṇâ bhavantâ(C °ntâ ')bhi ° rvâṇaṁ tasya°. — 14. BC °ti abhi°. — 15. C °jitaṁ saṁgrâ ° rjitâ ça° B °upetyagâ sarva° C °upegâ sarva° BC °bhavâu iti ||.

16. C °vân saṁmya ° to tam arthaṁ abhi° B °tam arthaṁm abhi° C °kkâsanaçabde° BC °gno anu°. — 17. C °râṁ saṁmya ° buddhitvâ pravritte dharmma° B °tte pravritte

पृष्ठे आहता ॥ तानि राजार्हाणि वस्त्राणि गोमयपिण्डेन विनाशितानि ॥ सा दानि सुदर्शना राजधीता श्वश्रुमलिंदां महादेवीमाह ॥ भट्टे इमस्य रथपालस्य दण्डो प्रणामयितव्यो । लभ्या एतेन राज्ञो कुशस्य अग्रमहिषीं गोमयपिण्डेन आहनितुं ॥ अलिंदा महादेवी आह ॥ पुत्रि मर्षेहि एष राजक्यो रथपालः अवध्यो राज्ञो रथकोशधारो किं शक्या कर्तुं ॥ सा दानि सुदर्शना ताय अलिंदाय महादेवीय संज्ञप्ता ॥

तत्र दानि अपरेण कालेन या राजक्या हस्तिशाला तत्राग्निः मुक्तो महान्तो अग्निदाहो प्रज्वलितो ॥ हस्तिमेण्ठसहस्राणि महामात्राणि च अन्यश्च महाजनकायो सन्निपतितो [246a] हस्तिशालां निर्वापयिष्यामः न च शक्नोन्ति तं अग्निदाघं परिनिर्वापयितुं अन्तःपुरं पि तेन अग्निभयेन सर्वं भीतं सन्त्रस्तं संवृत्तं मा इमं पि राजकुलं दहिष्यतीति ॥ ता दानि सर्वाः अन्तःपुरिका यतो हस्तिशाला ततो निर्धावमाना आसन्ति को शक्नोति एतं हस्तिदाघं परिनिर्वापयितुं ति ॥ महाजनकायं खिज्जन्ते न च शक्नोन्ति तं अग्निदाघं निर्वापयितुं न च शक्नोन्ति तानि हस्तिशालाय पटलानि घनानि महन्तानि बकुजनउत्तकानि पातयितुं ॥ तस्मिंश्च कालान्तरे राजा कुशो वहिर्नगरे अनुचंक्रमन्तो अनुविचरन्तो अण्वति । तस्य दानि राज्ञो अमात्येन पुरुषेण निवेदितं ॥ महाराज यं खु जानेसि या राजक्या हस्तिशाला तत्र अग्निः प्रज्वलितो ॥ श्रुत्वा च पुनः राजा कुशो हस्तिस्कन्धवरगतः जवेन तां हस्तिशालां सपरिवारो आगतो ॥ सर्वाहि अन्तःपुरिकाहि राजा आपतन्तो दृष्टो तेन राज्ञा आपतन्तेन तानि प्रदीप्तानि पटलानि एकेनोत्साहेन सपच-

1². BC °aliṁdâ ma(B °dân ma)hâ°. — 2. B bhartte i° C °thapârasya dando pradâpayitavyâ la° B °vyo la°. — 3. BC labhyâ yatena râ° gramahi(C °hi)shi go° C °gomayena pi°. — 4¹. B °liṁdâṁ ma°. — 4². BC putri marshe° BC °esha(C °sho) râjâkyo rathapâlaḥ atadhyo(C °lo abandhyo) râjño°. — 5. C °dâni çudarçanâ tâye aliṁdâye deviya saṁjñâkâḥ tatra°.

7. BC °lito ha°. — 8. BC hastimanṭha° trâṇâṁ ca anyaç ca(C °nye ca) mahâja° lâṁ nirddhâpayi° knoti taṁ(C °ti etaṁ) agnidâghaṁ(C °dâhaṁ) pari° C °rvâyituṁ antaḥ° ttaṁ mâ imam api râ°.

11. C sarvân antaḥ° B °rvâḥ purikâ° C °tato niddhâpayamânâ âsati kiṁ çakno° B °rddhâyamâ° nti kiṁ çaknonti | etaṁ° C °yituṁ mahâ° B °yituṁ ti mahâ°. — 12. B °khijjantaṁ na ca çaknoti | taṁ agni° C °jjantaṁ ca na çaknoti taṁ agnidâghaṁ nivâpayi° BC °knoti tâni hastiçâlâya pâṭalâni gha°. — 14. C tasmiṁ ca kâlâ° ço vahinagare anucakraṁmanto anuvi° B °re anucakra° ṇvati tasya° C °ṇvanti | . — 15. C °rushoṇa ni°.

16. B °hârâje yaṁ°. — 17. C °skandhevaragato jave° BC °âgato sarvâ°. — 18. BC °jâ âpa(C °âya)ntaṁto drishṭvâ tena râjñâ âpa(C °âya)ntakena tâ° C °prajñaptâni paṭalâni ekarahe sâyena sayaksha° B °ekahessâye sayaksha° BC °lakandakâni tataḥ(C °to) hasti°.

ष्कानि सतलकण्टकानि ततः हस्तिशालातो वाह्यमुखं क्षिप्तानि ॥ ये पि हि हस्तियो वरत्रेहि बद्धानि तानि बन्धनानि हस्तेन च्छटच्छटाय च्छिन्दति । ये पि हस्तिनामा अग्निना अभिग्रस्ता तानि उत्क्षिपित्वा अग्निभयातो एकमन्ते क्षिपति ॥ एवं दानि कुशेन राज्ञा मुहूर्तेन हस्तिशाला निर्वापिता सर्वा हस्तिवाहिनी अग्निदाघातो मोचिता एको पि न हस्तिर्दग्धो नाबाधितो ॥ तत्र दानि अनेककोटीशतसहस्राणि राज्ञो कुशस्य तादृशां वीर्यपराक्रमां दृष्ट्वा हक्कारसहस्राणि प्रवर्तेन्ति । अन्तःपुरं पि राज्ञो कुशस्य तादृशं पुरुषपराक्रमं दृष्ट्वा सर्वे प्रीता तुष्टा अहो राज्ञो कुशस्य बलो अहो पराक्रमं ॥ तत्र दानि अपरा कुब्जा हर्षिता वेगजाता राजा राजा ति कुशं संरावेति ॥

सिंहसुपीठो बलवां शोभे सुविपुलो महां ।
खे चन्द्रो इव आभाति समन्तपरिमण्डलं ॥
चकोरताम्रायताक्षो कामदेवो व शोभति ।
हस्तिनो मोचये राजा स्थामोपेतो नरर्षभो ॥

सो दानि राजा कुशो तस्या कुब्जाय प्रीतो दायं देति संवारेति वरं ॥

भद्रिका खु अयं कुब्जा या राजानं प्रशंसति ।
काशिकानि ते वस्त्राणि ददामि चतुरो अहं ॥

सा दानि सुदर्शना राजधीता तां कुब्जां कुशस्य वर्णं भाषमाणां श्रुत्वा तस्या दानि सुदर्शनाय राजधीतु एवं [246b] भवति ॥ एषः राजा कुशो भविष्यति

1. B °trehi varddhâni tâ° C °trehi varddhâvitâni tâ ° stena cchatacchaṭâ° BC °cchindanti | . — 2. B ye hi ha° C °gâ agninâ agnigra ° tkshiyitvâ agnibha° B °ekatamante kshipanti || C °kshipitvâ agnibhayâto ukshipanti | . — 4. BC °muhurtte° C °çâlâ nirddhâvitâḥ | sarvâm̃ hastiçâlâ nirddhâvitâ sarvâm̃ hastivâhi ° mocito e° B °citaḥ e° C °na hasti dagdho°. — 5. B °hakkârasahasrâṇi varttanti | .

7. C °purusham̃ parâkramam̃ dṛi ° sya balo parâ°. — 8. C °gajâtâḥ râjâ râjeti kuçam̃ sarâjeti | B °çam̃ sarâceti | . — 10. BC sim̃hâ su(C °sa)piṭhâ balavâm̃ste(C °ste ca) vipula (C °lo) mahâsu(C °sa)kha candro°.

11. BC khacandro ca âbhâti | samanta(C °ntena) pari ° lam̃ cako°. — 12. B cakolatâ° BC °vo ca ço°. — 13. C °sthâmapato nararshabhoḥ | . — 14. C °râja kuço° BC °tasya kubjâ° C °prite dânam̃ de° BC °sam̃râveti va nam̃ | (C °ti ca nam̃) bha°. — 15. BC °drikâ cadayam̃ | ku° B °bjâ râjânam̃ prasam̃çati kâ° C °prasaçati kâ°.

16. C °çikâni vastrâ° B °strâni da ° ture aham̃ | . — 17. BC °shamânâṇi çrutvâ (C °tvâ | ) tasya dâ° C °rçanâ râjadhituḥ c° B °bhavatu | . — 18. C esho râjâ çuço bhavishyati | yasyaishâm̃ kubjâm̃ varṇṇam̃° B °eshâm̃ kubjâ°.

यस्य एषा कुब्जा वर्णं भाषति ॥ सा दानि सुदर्शना राजधीता राजस्य कुशस्य तादृशं वर्णरूपं दृष्ट्वा मानसं से प्रत्याहतं दुःखदौर्मनस्यजाता संवृत्ता ॥ मा ताव एदृशो मम भर्ता एवं दुर्वर्णो दुर्दृशो स्थूलोष्ठो स्थूलशिरो स्थूलपादो महोदरो कालो मषिराशिवर्णो पिशाचस्य च एतस्य च नास्ति किंचित् नानाकरणं ॥ सा दानि सुदर्शना देवी तस्या कुब्जाये रुषिता आह ॥

न नाम एताये कुब्जाये जिह्वाये अस्ति च्छेदको ।
सुतीक्ष्णेन शस्त्रेण या राजानं प्रशंसति ॥

सा दानि कुब्जा सुदर्शनां देवीं गाथाये संज्ञपेति ॥

प्रतितर्जेन्ति राजानो बंधनेन वधेन वा ।
तस्मास्य वर्णं भाषामि रक्षं जीवितमात्मनो ॥

सा दानि सुदर्शना देवी राजं कुशं तादृशं दृष्ट्वा दुर्वर्णं दुर्दृशं दृष्ट्वा तत्र राजकुले एवं रमणीये देवभवनसन्निभे अनन्तरत्नाकरे रतिं न विन्दति अन्नपानेन से छन्दः नोत्पद्यते । नाहं अत्स्यामि न भोक्ष्यामि किं जीवितेन मे यदहं पिशाचेन सार्धं संवसामि ॥ सा दानि सुदर्शना राजधीता श्वश्रुमलिंदां महादेवीं विज्ञपेति ॥ भट्टे मुञ्चाहि मे कन्यकुब्जं गमिष्यामि मातापितुः सकाशं ॥ यदि मे न ओसिरिष्यसि मुहूर्तेन उपक्रमेमि आत्मानं मारयिष्यं ॥ तस्या दानि अलिंदाये महादेवीये एवं भवति ॥ वरं अयं राजधीता जीवति नैव मृता ति ॥ सा दानि अलिंदा महादेवी आह ॥ पुत्रि गच्छ यत्र ते अभिप्रायो ॥

1. B °çaṁ varṇṇaṁ rû° C °saṁ sa pratyâhṛitaṁ° B °rmanasyaṁjâtâ saṁvṛittâ tâvat° C °vṛitto ‖ . — 2. B tâvat mâtâ ca edṛi° C tâṁ ca mâtâ ca edṛi ° vaṁ duvarṇṇo dudṛiço sthuloshṭho sthulaçiro sthulapâdo° B °shṭho sthûlaçiro sthûlapâ ° lo mâsharâçisya varṇṇo piçâ° C °kâlo mâshoraçivarṇṇo piçâçcasya etasya vâ nâsti° B °etasya vâ nâsti | kiṁ° C °kiṁcin nânâka° B °ṇaṁ sâ dâ°. — 4. C °deviye tasya ku° B °tasya ku°.

6. B na nâme etâ ° cchedako suti°. — 9. C °baṁdhanena ca | . — 10. BC tasmâd vivarṇṇaṁ bhâshâsi rakshaṁ°.

11. C °tâdṛiçaṁ dṛishṭvâ duvarṇṇa dudṛishṭvâ tatra râ ° vaṁ na ramaṇi° B °ṇiyaṁ devabhavanaṁ sanni° C °ntaratnâkare ratiṁ na viṁndanti | anupânaina sacchando no° B °ndanti anupânena se cchaṁdaḥ no° BC °dyate nâhaṁ°. — 13. BC nâhaṁ dâsyâmi na bho° C °jîvite yad ahaṁ piçâcena sârddha saṁ° B °rddhaṁ saṁvasâmi | . — 14. C °aliṁdâ mahâdeviṁ vijñayenti | . — 15[1]. B bhartte mu ° shyâmaḥ | mâ° C °shyâmaḥ mâ° BC °çaṁ yadi°. — 15[2]. BC °osarishyasi(C °si | ) muhurtte° C °kramesi â°.

16. C tamâ dâ° B °bhavati varaṁ°. — 17[1]. C °alaṁ râja° BC °jivanti na° C °naivaṁ mṛi° — 17[2]. C °liṁndâ ma°. — 18. C °prâyaḥ sa dâ°.

सा दानि सुदर्शना राजधीता कुब्जाद्वितीया अश्वरथं अभिरुहित्वा वाराणसीतो निर्यात्वा प्रस्थिता अनुपूर्वेण कन्यकुब्जं गता मातापितुः सकाशं ॥ सो दानि राजा कुशो विकाले शयनगृहं प्रविष्टो सुदर्शनां देवीं न पश्यति । राजकुले समन्तेन मार्गियमाना न कुत्रचिद्दृश्यति ॥ सो दानि राजा कुशो सुदर्शनां देवीं न लभन्तो उत्कण्ठति शोचति परितप्यति । एवं विस्तीर्णे अन्तःपुरे त्वां न लभति ॥ यदा से विदितं यथा सुदर्शना देवी कुब्जाद्वितीया ज्ञातिकुलं गता सो दानि राजा कुशो मातरं अलिंदां विज्ञपेति ॥ अम्बे अहं पि गच्छामि कन्यकुब्जं श्वशुरस्य महेन्द्रस्य मद्रकराज्ञो सकाशं सुदर्शनां देवीमानयिष्यामि ॥ सा दानि अलिंदा महादेवी पुत्रस्य कुशस्य वचनं श्रुत्वा कन्यकुब्जं गमिष्यामीति ततः पुत्रप्रेम्नेन राज्यतृष्णाये [247a] च मूर्छिता प्रस्खलिता च भग्ना धरणीतले प्रपतिता पुत्रशोकसमन्विता ॥ अहो मम मन्दभाग्याये अनर्थं । पर्येषिता यतो इयं मया महेन्द्रकस्य कन्यकुब्जकस्य मद्रकराज्ञो धीता सुदर्शना इहानीता ततो न जानामि कथं मे पुत्रस्य राज्ञो कुशस्य भविष्यति ॥ सा दानि अलिन्दा महादेवी पुत्रस्य कुशस्य जल्पति ॥ पुत्र त्वं इक्ष्वाकुराजपुत्रो सुकुमारो सुखसंवृद्धो जानपदा च शक्तुभक्ता कम्बलपरिधाना च दिवसकर्मलूखाहारा च कथन्ते मार्गगमनं भविष्यति ॥ राजा कुशो आह ॥ अहं अम्बे नृत्यगीतवाद्येन अन्याहि च मायाहि विविधेहि च उपायेहि आत्मनो वृत्तिं कल्पयन्तो गमिष्यं मा उत्कण्ठतु अम्बा ॥ सो राजा कुशो तां मातरं संज्ञापयित्वा भ्रातरं कुशद्रुमं राज्ये प्रतिष्ठापयति ॥ भ्राता

1. C sa dà ° rveṇa anyakubjaṁ° B °çaṁ so dà°. — 2. C °dàni kuço vikàle yanagṛi° B °pravishṭho su ° çyati ràja°. — 3. B °traçcid dṛi°. — 4. C °devim alabha° B °çocati | parı°. — 5. BC °stirṇṇo antaḥ° C °purenti labha° B °purenti na labhanti yà se°.

6. C yà vare vidi° B yà se vi ° vì kubjodvi° BC °gatà | so° B °màtalaṁ aliṁ° C °màtaram alindà devì vijñapenti | . — 7. B °cchâmi karṇṇekubjaṁ çvaçrurasya mahe° C °kanyakubjam çvaçrusya madra° BC °rçanà deviṁm ânayi°. — 8. C °liṁndà mahâ° B °liṁdàṁ mahà° BC °shyâmiti | tataḥ(C °to) putrapre° C °ràjyaṁtṛishâye ca mûrcchitàḥ praskha°.

11¹. C aho ma manda° BC °narthaṁ pa°. — 11². C paryyashità kareyaṁ mayà° B °shità kaleyaṁ mayâ° C °ndrakasya kaṁnya°. — 13. BC °ni àha ‖ alindà° B °lpati pu°. — 14. C °bhaksho kamba° B °divasaṁ karma°.

16². B ahante nṛi° C °gitâvâdyena anyehi ca màyàhi ca vivi° B °âtmâno° C °lpayaṁ tato gami ° tu ambe ‖ . — 17. BC °kuço(C °çaṁ) tà màta° C °jñâpayicà bhrà ° jye pratisthâpayati | bhrâtaraṁ kuçadrumaṁ râjye pratisthâpayati | B °shṭhâyati | . — 18. C bhràtà imàni te shashṭhì nagara ° nigamajanapadà° B °dàni eçvaryaṁ kà ° màni te shashṭhiṁ hasti° C °shashṭhi hasti° C °hemajàlepraticcha° B °nnàni sakhalapravàràṇi shashṭhiṁ açva° C °shashṭhim açva ° rve sainyavànâṁ çi° B °ndhavànàṁ çi° BC °ghravàhinâṁ sarvà ° shi-

इमानि ते षष्टि नगरसहस्राणि सनिगमजानपदानि ऐश्वर्यं कारापेहि इमानि ते षष्टि हस्तिसहस्राणि सर्वालंकारविभूषितानि हेमजालप्रतिच्छन्नानि सखुरप्रवालानि षष्टि अश्वसहस्राणि सर्वं सैन्धवानि शीघ्रवाहीनि सर्वालंकारविभूषितानि षष्टि रथसहस्राणि सिंहचर्मपरिवाराणि व्याघ्रचर्मपरिवाराणि द्वीपिचर्मपरिवाराणि पाण्डुकम्बलप्रतिच्छन्नानि सनन्दिघोषाणि सवैजयन्तिकानि सखुरप्रवालानि उच्छ्रितच्छत्रध्वजपताकानि इमानि ते वाहनानि । इमं राज्यं परिपालेहि याव मम आगमनं भविष्यति ॥ सो दानि राजा कुशो अमात्यानां संदिशति ॥ एषो वो कुमारो कुशद्रुमो राजा मम यावदागमनं । एवं जानथ । तथा एव राज्यं समनुशासथ धर्मेण च पौरजानपदां परिपालेथ ॥ सो दानि राजा कुशो अमात्यानां एवमनुशासयित्वा भ्रातरं कुशद्रुमं राज्ये प्रतिष्ठापयित्वा मातरमलिंदां महादेवीं अभिवादयित्वा प्रदक्षिणीकृत्वा सप्ततन्त्रिकां वीणामादाय उत्तराभिमुखो प्रस्थितो ॥

राजा कुशो विविधेहि उपायेहि आत्मनो वृत्तिं कल्पयंतो कन्यकुब्जं श्वसुरं येन गच्छति अनुपूर्वेण कन्यकुब्जस्य विषयमनुप्राप्तः ॥ तत्र अन्यतरस्मिं ग्रामे वासमुपगतो अपराये वृद्धाये शालाये प्रतिश्रयो दिन्नो ॥ तत्र ग्रामे उत्सवो व वर्तति । [247b] सो दानि राजा कुशो ताये वृद्धाये वुच्चति ॥ पुत्र इह ग्रामे उत्सवो वर्तति व्रज ग्राममध्ये तत्र किंचिदन्नपानं लभिष्यसि ततः आहारं कृत्वा प्रतिक्रमिष्यसि ॥ सो दानि राजा कुशो तस्या वृद्धाय श्रुत्वा ग्राममध्यं गतः ॥ तेन दानि राज्ञा कुशेन तादृशी वीणा वादिता गीतकं गायितं यं सर्वो ग्रामजनो आराध्यति । एतस्य दानि कुशस्य ग्रामजनेन प्रीतेन समानेन नानाप्रकारस्य खज्जकस्य पूरं गोपिटकं दिन्नं महान्तं अलिन्दं ओदनस्य दधिकलशश्च नानाप्र-

tâni shashṭhi(C °shṭhiṁ) rathasahasrâni siṁ° C °siṁhacarmaparivṛitâni vyâ ° mbarapraticcha° C °dhvajapratâkâni° B °vâhanâni imaṁ°.

6. C °jyaṁ pratipâlehi yâvat mama â°. — 7[1]. BC °nâṁ sandiçati | . — 7[2]. C °drumarâjâ ma° BC °mama jânatha(B °tha | ) to gaccha(C °taṁ âgaccha) | . — 8[1]. BC °tha tathâ°. — 8[2]. BC °evaṁ râjyaṁ° C °jyaṁ abhivyapaharatha râjyaṁ samanu ° rmeṇa ca ye ca jânapadâṁ° B °ṇa ca yo ra jânapadâṁ pariletha | C °ripâlatha | . — 9. C °tyânaivaṁ samanu° BC °m alindâṁ mahâ° B °mukhâ prasthito | C °sthitâ ‖ .

13. B °yaṁto | kanya° C °nyakubjakaṁ çvaçrurakaṁ ye° BC °ptaḥ tatra°. — 14. C °gataḥ aparâ ° lâye praviçayo dinnaḥ tatra°. — 15. C °vo varttati | B °vo vâ varttati | .

16[1]. C °vucyati | B °ccati pu°. — 16[2]. BC °rttati | tatra grâ ° cid anu(C °nû)pânaṁ labhishyati tataḥ° C °hâra kṛi°. — 18. C °râja kuço tasya vṛiddhâye çru° B °grâmaṁmadhyaṁ gataṁ | C °grâmamadhye gataḥ. — 19. B °râjâ kuçe° C °gâyatâ yo sarva grâ° B °gâyitâ yâ sarvo° BC °dhyati no tasya dâ°. — 20. BC no tasya dâ° C °tena sanmâne° BC °jjakasya puraṁ gopuraṁ piṭa° C °ntaṁ alindaṁ o° BC °odanaç ca dadhi°.

काराणि च व्यंजनानि ॥ तेन दानि राज्ञा कुशेन खाद्यभोज्यं सर्वं वृद्धाये शालां प्रवेशितं ॥ सा दानि वृद्धा प्रभूतखाद्यभोज्यं दृष्ट्वा (पूरं महान्तं गोपिटकं नानाप्रकारस्य च खज्जकस्य पूरं पिटकं दिन्नं महान्तं अलिन्दं ओदनस्य नानाप्रकाराणि च व्यंजनानि तेन दानि राज्ञा कुशेन प्रवेशितं दृष्ट्वा च पुनर्वृद्धा) प्रीता संवृत्ता । अद्य एषः गान्धर्विको एकाहारं कृत्वा पश्चिमे यामे गमिष्यति तं शेषं खाद्यभोज्यं मम द्वैमासिकं त्रैमासिकं वा भक्तं भविष्यति ॥ तेनापि दानि राज्ञा कुशेन तस्या वृद्धाये आलापं करन्तेन एकार्धं व यन्तं गोपिटकं खज्जकस्य प्रखादितं । सापि वृद्धा जानाति । इदानिं पि मुहूर्तके पि एषो मम खज्जकशेषं दास्यतीति । तेनापि दानि राज्ञा कुशेन बुभुक्षितेन सर्वं तं गोपिटकं खज्जकस्य खादितं न एवं पि खज्जालोपं शेषकृतं ॥ तस्या वृद्धाये एवं भवति ॥ यदा इमेन गान्धर्विकेन तं महान्तं गोपिटकं खज्जकस्य सर्वं खादितं आशितो एषः भविष्यति । न धारयिष्यति एषो भूयो इमं अलिन्दं मोदकस्य खादितुं । एवम्मम चिरस्य कालस्य भक्तं भविष्यति ॥ तेन दानि राज्ञा कुशेन मार्गगतेन बुभुक्षितेन महान्तं अलिन्दं मोदकस्य तं च दधिकलशं तानि च व्यंजनानि नानाप्रकाराणि सर्वं परिभुक्तं । तस्या वृद्धाये न किंचि शेषकृतं ॥ सा दानि वृद्धा निराशा संवृत्ता अविधाविधं प्रविशथ धावथ प्रवेशितकायो मनुष्यरूपेण मे पिशाचो गृहं प्रविष्टः मम खादितुकामो ॥ राजा कुशो आह ॥ अम्बे किमारवसि किन्न द्रवसि । ग्रामस्मि न च का पि पापका वसन्ति मा त्रसाहि मा रवाहि । इमां एकरात्रिं वसित्वा ध्रुवे गमिष्यामि ॥

सो दानि राजा कुशो प्रत्यूषलेशकाले उत्थाय प्रस्थितः अनुपूर्वेण कन्यकुब्जं

1. C °sarva vṛi°. — 2. C so dàni vṛi° BC °shṭvà puraṁ mahà ° jjakasya puraṁ gopiṭa° C °ntaṁ alidaṁ o° BC °odanaçca nànàpra ° janàni | tena dàni ràjñà(C °jño) ku° C °puna vṛirddhà pri ° vṛittàḥ | . — 5. C °esho gandha° B °shaḥ gandharviko ekààraṁ kṛi° BC °mishyati | taṁ çe° C °bhojya mama dvaumàsikaṁ traimâsikaṁ vâ° BC °vishyasi | .

6. C te dàni° BC °tasya vṛi° B °ddhàye alâpaṁ° C °ddhàye àràvaṁ ka° B °ekàrddha và yantaṁ° C °rddhaṁ và yantraṁ go ° sya pravàdito so pi° B °ditaḥ so pi vṛi°. — 7. BC so pi vṛi°. — 8. C idànim api mu° BC °muhurttakaṁ pi° BC °jjakaṁ çeshaṁ° B °syamiti | . — 9. BC °khajjarùpaṁ çe° C °çeshaṁ kṛitaṁ | . — 10[1]. BC tasya vṛi ° vati yadà°. — 10[2]. C °esho bha°.

11. C °alinḍaṁ mo° B °aliṁdà modanasya°. — 13. B te dàni° C tena dà rà ° màrgaṁgate ° ntaṁ alinḍa mo° B °alinda modanasya tañ ca dadhi° C °vyaṁja mama khâditukàmah° (l. 16). — 14. B °çeshaṁ kṛitaṁ so dà°. — 15. B so dâ ° çâ saṁvṛitto avidhàvidhâṁ pradeçità dhâ ° vishṭhaḥ mama°.

17[2]. C °àravasi kiṁ rava°. — 17[3]. C gràme 'smiṁ na ca ko pi pà° BC °pakà pi vasa° C °mà trastàhi mà° B °nti mâ pravastàhi mâ ra°. — 18. C °râtriṁ va° B °triṁ vaçitvà°. — 20. BC °shadeçe(C °ça)kâle° C °sthito a ° pràptaṁ || mà ° çâlàyâṁ pravishṭo B °làṁ prasthito | .

अनुप्राप्तः मा[248a]लाकारशालां प्रविष्टो । मालाकारमहत्तरकस्य अल्लीनो अहं पि इमहिं वसिष्यं अहं पि अत्र कर्मे कुशलो ॥ तत्र दानि मालाकारशालायां राजन्यानि कण्ठगुणानि गन्धमकुटा च माला च क्रियन्ति ॥ सो दानि राजा कुशो तादृशानि कण्ठगुणानि च गन्धमकुटानि च मालाश्च सुकृतानि सुनिष्ठितानि च सुविचित्राणि च आकारवंतानि च करोति यथा सर्वे मालाकारा दृष्ट्वा विस्मयमापद्यन्ति । अहो कल्याणो आचार्यपुत्रो शोभनो शिल्पिको य इमानि एदृशानि कण्ठगुणानि गन्धमकुटानि च मालाश्च तादृशानि सुकृतानि सुनिष्ठितानि करोति यथा अस्माभिः न कदाचि दृष्टपूर्वा । सर्वाणि च राजा कुशो आत्मनो नामकेन आलिखति यथा सुदर्शना जानेया राज्ञो कुशस्य एतं कर्मन्ति ॥ तानि कण्ठगुणानि गन्धमकुटानि मालाश्च राजकुलं प्रवेशिता सुदर्शनाये उपनामियन्ति । पश्य सुदर्शने इमानि पुष्पजातानि केदृशानि सुकृतानि सुविचित्राणि सुनिष्ठितानि नानावर्णानि ॥ सा दानि सुदर्शना यं तत्र सर्वशोभनं कण्ठगुणं च मकुटं च मालावरं च गृहीतं आबन्धामि न्ति यावत्पश्यति कुशस्य नामकं । तस्या एतदभवति । कुशस्य एतं कर्मन्ति राजा कुशो प्राकृतकेन वेशेन इहागतो भविष्यतीति ॥ सा दानि सुदर्शना तानि कुशेन कृतानि मेल्लित्वा अन्यानि प्राकृतकानि गृह्णति ॥ सा दानि सुदर्शना मातरे वुच्चति भगिनीहि च वुच्चति अन्तःपुरिकाहि । सुदर्शना किं त्वमिमानि सर्वशोभनानि कण्ठगुणानि मकुटानि मालाश्च मेल्लित्वा अन्यानि प्राकृतानि गृह्णसि ॥ सा तामाह ॥ अलं मे एतेहि एतमेव मे भवतु ॥ यन्तत्र रहस्यं तन्न कस्यचिदाचिचति ॥

सो दानि राजा कुशो मालाकारस्य मूले वसित्वा अर्थं नोपलभति । ततः

1. B °kâlamaha° C °kâramahattarakasya mûle allîno } ahaṁ pi imahiṁ vaçikhyaṁ ahaṁ pi atra kuçalo karmaḥ tatra° B °llîno ahaṁ pi imaṁhi vaçishyaṁ°. — 2. BC °nyâni kaṇṭhe(B °ṇḍe) gu ° lâ kri(C °krî)yanti | . — 3. BC °çâṇi kaṇṭhe gu° B °ṭâniç ca mâlâ° C °ṭâni sukṛitâni suniççitâni sucitrâ° B °trâṇi ca | âkâra ° ronti | yathâ° C °rve kâlâkârâ dṛi°.

6. C °ṇo càryyapu ° bhanâ çilpiko yo i° B °bhanâni çilpikâ ya i° BC °edṛiçâni kaṇṭhe gu° C °ndhamakûṭâni ca mâlo ca tâdṛiçâni sukṛitâni suniççitâni suvicitrâṇi ca karo° B °nishṭitâni karo° C °smâbhir na kadâ° B °pûrva sarvâ°. — 8. C °yâ râjâ kuçasya evaṁ ka° B °nti tâ°. — 9. BC °ni kaṇṭhe gu° C °ndhamakûṭâ ° paṇâmayanti.

11. B °citrâṇi° C °suniççitâni nânâ° B °nishṭitâni nânâ°. — 12. B °naṁ kaṇṭhe gu° C °naṁ kaṇṭhe guṇa ca ma° BC °kuṭâṁ ca mâlâṁ va(C °lâm va)naṁ grihîtaṁ(B °taṁ | ) abandhâmi nti yâ° B °sya namekaṁ tasyâ°. — 14[1]. C °shyati ‖. — 14[2]. BC °ni prakṛitakâni grihṇati | . — 15. B °bhaginiṁ ca vuccati | antaḥ° C °bhaginî ca vuçyati antaḥ° BC °kâhi suda°.

16. C °çobhaṇâni° BC °kaṇṭhe gu° BC °ni prakṛitâni grihṇa(C °hne)si ‖ . — 18[1]. B sâ tân âha ‖ . — 18[2]. C °etam etaṁ bha°. — 18[3]. C yaṁ tatra rahasyaṁ ta nu ka°. — 20[1]. C °jâ ku mâ ° le vaçitvâ° B °le veçitvâ artha no°. — 20[2]. C tato ni ° mbhakârasya mû°.

निर्धावित्वा कुम्भकारमहत्तरकस्य मूले अल्लीनो ॥ तत्रापि राजान्तःपुरस्य कृते नानाप्रकाराणि कुम्भकारभाजनानि क्रियन्ति । सो दानि राजा कुशो तादृशानि कुम्भकारभाजनानि सुकृतानि सुनिष्ठितानि आकारवन्तानि करोति यथा सर्वे कुम्भकारा दृष्ट्वा विस्मयमापद्यन्ति । अहो कल्याणाचार्यपुत्रो शोभनः शिल्पिको य इमानि एदृशा कुम्भकारभाजनानि सुकृतानि सुनिष्ठितानि आकारवन्तानि करोति यानि अस्माभिः न कदाचि दृष्टपूर्वाणि । सर्वेषु [248b] च कुशो राजा स्वकं नामकं संज्ञामात्रकेन आलिखति यथा सुदर्शना जानेया कुशस्येदं कर्मन्ति । ताहि दानि अन्तःपुरे दासीहि तानि कुम्भकारभाजनानि राजकुलं प्रवेशितानि सुदर्शनाये च उपनामियन्ति । पश्य सुदर्शने इमानि कुम्भकारभाजनानि यादृशानि शोभनानि कल्याणानि सुकृतानि सुनिष्ठितानि यन्ते रुच्यति तं गृह्णाहि । सा दानि सुदर्शना तानि कुम्भकारभाजनानि यं सर्वशोभनं सर्वदर्शनीयं तं गृह्णीष्यामीति यावत्पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्येतं कर्मन्ति । सा दानि तानि मेल्लित्वा अन्यानि प्राकृतका निप्रतिगृह्णाति ॥ सा दानि सुदर्शना मातरे वुच्चति भगिनीहि पि देवीहि । सुदर्शने एदृशानि भाजनानि न कदाचिदिह राजकुले प्रवेशितपूर्वाणि एवं शोभनानि । किस्य त्वं एतानि शोभनानि भाजनानि न गृह्णसि ॥ सा दानि आह ॥ अलं मे एतेन एतमेव मे भवतु ॥ यं तत्र रहस्यं तन्न कस्यचिदाचिक्षति ॥

सो दानि राजा कुशो कुम्भकारस्य मूले वसित्वा अर्थं नोपलभति । ततः निष्क्रमित्वा वर्धकिमहत्तरकस्य मूले अल्लीनो ॥ तत्रापि राजान्तःपुरस्य कृतेन नानाप्रकाराणि वर्धकिभाण्डानि क्रियन्ति । आसन्दिका पि क्रियन्ति मञ्चका पि

1. C °krite te nânâ° B °nti°so°. — 2. C °niçcitâni suvicitrâṇi âravantâm̃ni karo° B °nishṭitâni âkâra ° roti iti | yathâ° C °thâ sarvam̃ kumbhakâram̃ dṛi° B °m âpadyeti | . — 4. B °lyâṇâcâyapu° C °çobhaṇo çilpiko yo i° B °lpikâ yo i° C °edṛiçâni ku ° kṛitâni sunisuvicitrâṇi âkâra° B °nishṭitâni âkâra° C °smâbhir na ka° BC °rvâṇi sarve°.

6. C °svakam̃ sam̃jñâpâtrake° BC °khati | ya° C °rçanâ yâne°. — 8. BC tâ dâni a°siyo tâni kumbha° B °praviçitâni | su ° panâmîyanti paçya°. — 9. B °nishṭitâni yan te nucya° C °niçcitâni yam̃ te rucyati tam̃ gṛihnâti | B °gṛihnâti ‖ .

11. B °gṛihnîshyâ° C °gṛihnâmiti | yâ° BC °nâmakam̃ tasyâ°. — 12[1]. BC °ti ku°. — 12[2]. BC °karmam̃ ti | . — 13[1]. C so dâ ° melletvâ° BC °gṛihnâti | . — 13[2]. C °rçanâ tâtare vucyati bha° B °mâtarai vu° C °nihim̃ pi devehi pi° B °vîhi pi su°. — 14. C °rçane dṛiçatâni bhâm̃janâni na ka° BC °bhanâni ki°. — 15. B kiçya tvam̃ | e° C °bhanâni bhâm̃ja° BC °gṛihnasi(C °si | ) sâ°.

16[2]. C °tena evam̃ me bha° BC °tu yam̃°. — 18[1]. BC °le vaçitvâ arthâ(C °rtha) nopalabhyate(C °ti) | . — 18[2]. C tato ni° B °varddhantimaha° C °sya le alli° BC °no ta°. — 19. C °tena nâpra° B °rddhantibhaṇḍâ° C °rddhaki krîyanti. — 20. C °ndikâ pi krîyanti ravâhantikâ mam̃ca pi krîyanti piṭhikâ pi krîyanti ça° B °ndikâ pi kriyanti ravahanti mañcakâ

क्रियन्ति पीठका पि क्रियन्ति शय्यासनका पि क्रियन्ति पादफलकानि पि क्रियन्ति भद्रपीठकानि पि क्रियन्ति अयक्का पि क्रियन्ति फेलिकानि पि क्रियन्ति अंतकोटान्यपि क्रियन्ति अन्यानि च नानाप्रकाराणि वर्धकिभाण्डानि क्रियन्ति ॥ सो दानि राजा कुशो तादृशानि वर्धकिभाण्डानि सुकृतानि सुनिष्ठितानि आकारवन्तानि करोति यथा सर्वे वर्धकिनो दृष्ट्वा विस्मयमापन्ना । अहो कल्याणाचार्यपुत्रो शोभनो शिल्पिको यो इमानि एदृशानि वर्धकिभाण्डानि सुकृतानि सुनिष्ठितानि करोति यानि अस्माभिः न कदाचि दृष्टपूर्वाणि । सर्वेषु च राजा कुशो आत्मनो नामकं संज्ञामात्रकेण लिखति यथा सुदर्शना जानेया राज्ञो कुशस्येदं कर्मन्ति ॥ ताहि दानि अन्तःपुरिकादासीहि तं वर्धकिभाण्डं राजकुले प्रवेशितं । यानि सर्वशोभनानि तानि विचिनित्वा सुदर्शनाये उपनामीयन्ति । [249a] सुदर्शने पश्य पश्य इमानि वर्धकिभाण्डानि यादृशानि शोभनानि दर्शनीयानि । यन्ते अभिप्रेतं तं गृह्णाहि ॥ सा दानि सुदर्शना या तत्र सर्वशोभना आसन्दिका या मंचका या पीठका पादाश्रया वा पादफलका वा भद्रपीठा वा अयक्का वा अंतकोटा वा फेला वा फेलिका वा तं गृह्णामीति यावत्पश्यति कुशस्य नामकं ॥ तस्या दानि एवं भवति । कुशस्येदं कर्मन्ति ॥ सा दानि तं मेल्लित्वा अन्यं प्राकृतकं गृह्णाति ॥ सा दानि सुदर्शना माताये वुच्चति भगिनीहि च ताहि च अन्तपुरिकाहि । सुदर्शने किस्य त्वं इमानि एदृशानि वर्धकिभाण्डानि शोभनीयानि

pi kriyanti pîṭhikâ pi kriyanti çayyâçayikâ pi kriyanti | pâ° C °nakâ pi krîyanti pâ° B °phalashkâni pi kriyanti | bha° C °phalakâ pi krîya ° piṭhâni krîya° B °ṭhakâni pi krîyanti ayakvâ pi kriyanti helakâni pi° C °kvâ pi kriyanti helahâni pi krîyanti am̃bakotânyapi anyâ° B °am̃bakoṭâ ° nti | anyâ° C °ṇi ca varddhakibhaṇḍâni krîyanti | B °kibhaṇḍâni°. — 3. B °çâni tâdṛiçâni varḍdhakibhaṇḍâ° C °rddhakibhâ ° niçcitâni suvicitrâṇi âkâra° B °nishṭitâni âkâra ° ronti | yathâ sarva varddhantino° C °thâ sarvam̃ varddhakîbhâṇḍâni dṛi ° panno aho° B °panno | . — 5. B °lpikâ yo imâni edṛiçâni ca imâni edṛiçâni varddham̃tibhaṇḍâ° C °rddhakribhâṇḍâni suniçcitâni karo° B °nishṭitâni karo° C °smâbhir na kadâcit dṛishṭa° BC °rvâṇi sarve°.

7. B °yâ râjñâ kuçasye°. — 9[1]. B °rddhantibhâ° C °rddhakibhâ°. — 9[2]. C °sarveçobhanâni tâni nirminitvâ su° BC °rçanâye u° C °nâmiyanti | B °nti su°. — 10. B °imâni vivarddhanti | bhaṇḍâ° C °kibhaṇḍâ° BC °niyâni ya°.

11. C yan tatra abhipretam̃ gṛi°. — 12. BC °rçanâ yam̃ tatra sa ° bhanam̃ âsandi° C °ndikâ vâ mañcako vâ piṭhako vâ pâdâçra° B °ṭhako sâdâçra° BC °daphale(C °la)kham̃ vâ bha ° ṭhâ vâ aya(B °apa)kkâ vâ ava(B °ata)koṭâ° B °gṛihnimîti yâ° C °gṛihnanti iti | yâ° B °çyati kusya nâmakam̃ | . — 14. B tasya dâ ° vati ku°. — 15[2]. C sâ dâni te me° BC °gṛihnâti | .

16. C °mâtare shucyati bha° BC °nîhi ca tâni ca anta ° kâhi ca su°. — 17. C °ne kim̃sya° B °imâni ca edṛiçâni ca varddhatibhâ° C °imâni etâdṛiçâni ca varddhakibhâṇḍâni melli° BC °gṛihnâsi ‖ .



IMPRIMERIE NATIONALE

मेक्षित्वा अन्यानि प्राकृतकानि गृह्णासि ॥ सा दानि आह ॥ अलं मे तेहि इमानि एव मे भवन्तु ॥ यं तत्र रहस्यं तं न कस्यचिदाचिक्षति ॥

सो दानि राजा कुशो वर्धकिस्य मूले वसित्वा अर्थं नोपलभति । ततो निर्धावित्वा चोडकधोवकस्य मूले अल्लीनो ॥ तत्रापि राजान्तःपुरस्य कृतेन चोडकानि धोवीयन्ति सुदर्शनाया पि चोडकानि तत्रैव धोवीयन्ति ॥ सो दानि राजा कुशो सुदर्शनाये वस्त्राणि प्रत्यभिजानति । सो दानि राजा कुशो तानि सुदर्शनाय चोडकानि तादृशानि धोवति तानि सुप्रक्षालितानि चौक्षाणि निर्मलाणि धौतानि यथा सर्वे धोवका चोडका दृष्ट्वा विस्मयमापन्नाः । अहो कल्याणाचार्यपुत्रो शोभनो शिल्पिको यो इमानि चोलकानि एदृशानि सुधोवितानि सुप्रक्षालितानि चौक्षाणि निर्मलानि धोवति यानि अस्माभिः न कदाचि दृष्टपूर्वाणि ॥ राजा कुशो स्वकं नामकं भल्लातकेन संज्ञामात्रकेन लिखति यथा सुदर्शना जानेया कुशस्येदं कर्मन्ति ॥ ताहि दानि अन्तःपुरदासीहि तानि चोलकानि राजकुलं प्रवेशितानि यानि देवीनां चोलकानि तानि देवीनामुपनामितानि यानि अन्तःपुरिकानां चोलकानि तानि अन्तःपुरिकानां दिन्नानि । तानि दानि अन्तःपुरिका सुदर्शनाचोलकानि पश्यन्ति अवदातानि चौक्षाणि निर्मलानि । ता दानि विस्मयं लभन्ति सर्वशोभनानि सुदर्शनाय चोलकानि सुधोतानि च चौक्षाणि निर्मला द्विगुणं त्रिगुणं सुदर्शनाय धोवापनिकमर्हन्ति ॥ सुदर्शनापि तानि वस्त्राणि दृष्ट्वा शुद्धानि निर्मलानि प्री-

$1^2$. C alam̃ etehi i ° vam etehi bhavatu yam̃° B °ntu yam̃°. — 2. C °cikshasi | . — $3^1$. C °rddhakîsya° BC °vaçitvâ a ° labhyati(C °te) | . — $3^2$. C tataḥ ni° B °ḍakadhâvakasya° C °dhovikasya° B °llîna tatrâ°. — 4. B °tena coḍakâni dhâvîyanti su° C °rçanâni pi co ° ni tatra dhovî° B °vîyanti sâ dâ°. — 5. B sâ dâ° BC °bḥijânanti | .

6. B °kuçasya tâni su° C °rçanâye coḍakâni tâdri ° kshâlitâ cau° BC °caukshâni ni° B °thâ sarvam̃ dho° C °rve dhautakâ coḍa° B °m âpannaḥ aho°. — 8. B °çobhanâni çilpikâ yo i° C °coḍakâni sudho° B °prakshâvitâni cau° C °rmalânî dhauvati yam̃ asmâbhir na ka° B °ti yam̃ asmâ° BC °pûrvâṇi râ°. — 10. B °ço stakam̃° C °bhallâṭakena sam̃° BC °khati | yathâ°.

11. B tâ dâ° C tâ dâni antaḥpurikâhi tâni codakâni râ° B °sihi tâni caulakâni râ° BC °veçanti yâni devînâm̃ cola(C °cauksha)kâni tâni de ° mitâni antaḥpurikânâm̃ cola-(C °coda)kâni tâni antaḥpurikânâm̃(C °pûrikâm̃) di° C °nnâti | B °nnâni tâni dâ°. — 14. C tâ dâni antaḥpûri° BC °nti | ava° B °kshâni ni° BC °lâni tâ dâ°. — 15. B °dâni vippalabhyanti sarva° C °dâni vittam̃ labhyam̃ti sarvaçobhanâni sudarçanâye volakâni sudhâvitâni ca caukshâni nirmmalâni dvi° B °dvigaṇḍam̃ trigaṇḍam̃ su° BC °dhovâyamikam argheti su°.

17. BC °rçano pi tâ° C °strâni dri ° vrittâḥ yam̃ ca deçeti coḍako dho° B °vrittâ yam̃ ca deçante coḍa° C °llâṭake ° mâtrakena li° BC °likhati cola(C °coda)kâ nâmakam̃ karoti | tatra te ku°.

[249[b]]ता संवृत्ता याव यत्र देशान्ते चोडधोवनको भल्लातकेन संज्ञामात्रेण लिखन्तो चोलके नामकं करोति तत्र तं कुशस्य नामकं दृष्ट्वा कुशस्येदं कर्मन्ति । सा दानि न स्वयं प्रतीछति उपस्थायकाये गृह्णावेति ॥ तानि सर्वान्तःपुरिका स्वकस्वकानां वस्त्राणां धोवापनिकं चेटीनां हस्ते देन्ति । सा दानि सुदर्शना न इच्छति वस्त्राणां धोवापनिकं दातुं ॥ सा दानि सुदर्शना मातरे वुच्चति भगिनीहि च अन्तःपुरिकाहि च । सुदर्शने यदा तव चोलकानि सुधोवितानि सुचोक्षाणि सर्वाणि लंचकानि तस्य धोवापनिकं न देसि ॥ सुदर्शना आह ॥ किं युष्माकं चिन्ता दीष्यति सो अन्येन कालेन ॥ यं तत्र रहस्यं तं न कस्यचि आचिक्षति ॥

सो दानि राजा कुशो धोवकस्य मूले वसित्वा अर्थं नोपलभति । ततः निर्धाविता रजमहत्तरकस्य मूले अल्लीनो तत्रापि च रजकशाले राजान्तःपुरस्य चोलकानि रज्यन्ति सुदर्शनाय पि चोलकानि रज्यन्ति ॥ तत्रैव सो राजा कुशो सुदर्शनाये चोलकानि प्रत्यभिजानति । तेन कुशेन ताये सुदर्शनाये चोलकानि सुरक्तानि रंगरक्तानि सुविचित्राणि नानाप्रकाराणि तादृशानि रक्तानि यथा ते सर्वे रजा विस्मयमापन्ना । अहो कल्याणाचार्यपुत्रो शोभनः शिल्पिको यो इमानि एदृशानि सुरक्तानि सुविचित्राणि चोलकानि रजति यान्यस्माभिः न कदाचित् दृष्टपूर्वाणि । सर्वेषु च राजा कुशो स्वकं नामकं भल्लातकेन संज्ञामात्रकेन लिखति यथा सुदर्शना जानेया कुशस्येदं कर्मन्ति ॥ ताहि दानि अन्तःपुरिकादासीहि यानि यानि देवीनां चोलकानि तानि तानि देवीनां यतानि यानि अन्तःपुरिकानां चोलकानि तानि अन्तःपुरिकानां दिन्नानि । सुदर्शनाचोलकं

3[1]. C °dâni svayaṁ na praticchati upasthâyikâye° BC °gṛihnâve° B °veti tâ°. — 3[2]. C °strânâṁ dho ° kaṁ catinâ haṁste dẹ°. — 4. B °strâṇi dho° C °strâni dho°. — 5. C °mâtara vu° BC °kâhi ca su°.

6. C °rçanâye yadâ tava codakâ ° kshâni sarvâṇi ca laṁ° B °laṁcako ta° BC °deti ‖ . — 7[2]. B °shyasi so° C °shyanti so° BC °lena yaṁ°. — 8. C °syacid âcikshati | . — 10[1]. C °râja kuço° BC °vaçitvâ° C °artha nâyaṁ labhati | . — 10[2]. C tato ni ° trâpi ca so kuço râjâ° B °trâpi ca so kaçâle râjâ° C °sya codakâ ° rçanâpi codakâni rakshanti | .

12. C tatraivaṁ so dâni râ ° ye codakâ ° jânanti | B °bhijânati te°. — 13. B °rçanâya co° C °suraktâni suvicitrâṇi colakâni yonyasmâbhiḥ raṁ° BC °çâni raktâni ‖ yathâ° C °te sarvaṁ rajakâ vi° BC °panno aho°. — 15. C °bhano çi ° ktâni colakâni tâni yâni asmâ° B °lakâni yânya° C °cid dṛishṭa° B ° dṛishṭhapû°.

17. C °llâṭakena saṁ° BC °khati ‖ ya ° daṁ karmenti | . — 18. C tâni dâ° B °sihi tâni colakâni tâni tâni devinâṁ yantâni yâ° C °sihi tâni codakâni devinâṁ yantâni yâni antaḥpûrikâni co° BC °nnâni su°. — 20. C sudarçanâcodakaṁ antaḥ ° smitâ imâni sudarçanâya codakâni tâni suraktâni suniçcitâni suvicitrâni imâye°.

अन्तःपुरिका दृष्ट्वा विस्मिता इमानि सुदर्शनाये चोलकानि तानि सुरक्तानि सुदर्शनीयानि सुविचित्राणि इमाये सुदर्शनाये द्विगुणं त्रिगुणं रंजापनीयं दातव्यं ॥ ता दानि चोलकानि सुदर्शनाये उपनामितानि ॥ सा दानि सुदर्शना तानि चोलकानि सुरक्तानि सुदर्शनीयानि सुविचित्राणि दृष्ट्वा तुष्टा प्रीतिसौमनस्यसंवृत्ता याव यत्र देशे रजको भल्लातकेन अङ्कं करोति तत्र देशे [250a] पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्य तं कर्मन्ति । सा न प्रतीच्छति उपस्थायकाये प्रयच्छति ॥ ता दानि अन्तःपुरिका स्वकस्वकानां चोलकानां रंजापनिकं चेटिकानां हस्ते देंति सा सुदर्शना रंजापनिकं न इच्छति दातुं ॥ सा मातरे च भगिनीहि च अन्तःपुरिकाहि च वुच्चति । सुदर्शने यथा तव चोलकानि सुरक्तानि सुविचित्राणि दर्शनीयानि ततः त्वं यावद्द्विगुणं त्रिगुणं रंजापनिकं दातव्यं तन्न इच्छसि दातुं ॥ सुदर्शनाह ॥ किं युष्माकं चिन्ता दीष्यति सो अन्येन कालेन । यं तत्र रहस्यं तन्न कस्यचि आचिक्षति ॥

सो दानि राजा कुशः रजकस्य मूले वसित्वा अर्थं नोपलभ्य ततो निर्धावित्वा ततः तट्टकारमहत्तरकस्य मूले अल्लीनः ॥ तत्र दानि राज्ञो महेन्द्रकस्य आज्ञत्तिया अन्तःपुरस्य अर्थाय नानाप्रकाराणि सुवर्णरूप्यमयानि रत्नप्रत्युप्तानि भोजनभाजनानि पिबनभाजनानि च क्रियन्ति ॥ सो दानि राजा कुशो सुवर्णमयानि रत्नमयानि च रतनप्रत्युप्तानि भोजनभाजनानि पिबनभाजनानि च तादृशानि करोति सुदर्शनीयानि सुसंस्थितानि यथा एको पि तट्टकारो नास्ति यो तादृशानि भाजनानि शक्नोति कर्तुं ॥ ते दानि तट्टकारा तादृशानि दृष्ट्वा

3[1]. C °codakâ°. — 3[2]. B °drishṭhvâ tushṭâ pritimanasyasam̃vṛittâ yantam̃ yatra ca de° C °pritimaneso sam̃vṛittâḥ yam̃ te tatra ca de° BC °çe kuçakâ bha° C °llâṭake° BC °roti | tatra° C °çe likhati ku° BC °kam̃ tasyâ°.

6[2]. C kuçasyaitam̃ ka° B °nti sâ°. — 6[3]. C so na svayam̃ praticchati upasthâpakâ° BC °ye praticchati ‖ . — 7. BC °colakànàm̃ ram̃jâpanikam̃(C °ṇiyam̃) ce° B °ceṭikânâm̃ haste° C °ste denti | sâ su ° pani na i° B °panîkâm̃ na i°. — 8. C sâ mâturehi ca bha° B °mâtarehi ca bha° C °antapurikâhi ca vucyati | B °ccati su°. — 9. C sudarçanâye yadâ tava codakâ° B °yadâ tava° C °trâni darçanîyâni tam̃to tam̃ yâvat dviguṇam̃ tri° B °triguṇam̃ jâpanikam̃ tan na°.

11[1]. C °rçanâ âha ‖ . — 11[2]. C °shyasi | sa anye° B °nti | se anye° BC °lena yam̃°. — 11[3]. C yam̃ tra ra ° syacid âcikshati | . — 13. C °kuço raja° BC °vaçitvâ° C °artha nopalabhyati ‖ tato° B °vitvâ | tataḥ° C °vitvâ tambakâramaha ° llino tatra° B °llinaḥ tatra°. — 14. C °ndrakasya ânanti antaḥ ° rthâye nânâ° BC °varṇṇasya rû° C °ptâni bhojanabhâm̃janâni pibanam̃bhâm̃janâni ca krîyanti | .

16. C °rṇṇamayâni ratanâmayâni ca pratyuptâni ° bhojanabhâm̃janâni pibanabhâm̃janâni ca tâdṛiçâni ca ka° C °eko tambakâro° B °ṭṭakârau nâsti ‖ yo tâ° C °çâni bhâm̃janâni na ça°. — 19. C °ni tambakâro tâ ° pannâ aho°.

विस्मयमापन्नाः । अहो कल्याणाचार्यपुत्तो शोभनो शिल्पिको यो इमानि एदृशानि रत्नभाजनानि करोति यानि अस्मेहि न कदाचिद्दृष्टपूर्वाणि । सर्वेषु च राजा कुशः स्वकं नामकं संज्ञामात्रकेन लिखति यथा सुदर्शना जानेया कुशस्यैतं कर्मन्ति ॥ ता दानि राजक्यानि सुवर्णरूप्यमयानि भाजनानि यं कालं सर्वाणि निष्ठितानि तेन तट्टकारमहत्तरकेन राज्ञो महेन्द्रकस्य उपनामितानि ॥ सो दानि राजा महेन्द्रको यानि कुशेन भाजनानि कृतानि तानि दृष्ट्वा विस्मयति । यादृशानीमानि रत्नप्रत्युप्तानि भाजनानि कुशलेन इमानि आचार्येण कृतकानि ॥ सो दानि राजा महेन्द्रकः तानि रत्नभाजनानि च वर्षवराणां कांचुकीयानां च हस्ते देति । गच्छथ अन्तःपुरं प्रवेशेथ महादेवीये धीतुस्य मे सुदर्शनाये यथाभिप्रेतं पूर्वं देथ पश्चादपराणां देवीनामन्तःपुरिकानां च ॥ तेहि दानि वर्षवरेहि कांचुकीयेहि च तानि रत्नभाजनानि अन्तःपुरं प्रवेशितानि महादेवीये उपनामिता[250b]नि । देवि इमानि ते रत्नभाजनानि राज्ञा प्रेषितानि देवी च धीता च ते सुदर्शना यथाभिप्रेतं पूर्वं गृह्णन्तु पश्चादन्यासां देवीनां दीष्यति सर्वासां च अन्तःपुरिकानां ॥ सा दानि सुदर्शना मातये वुच्चति भगिनीहि च अन्तपुरिकाहि च वर्षवरेहि कांचुकीयेहि च ॥ सुदर्शने इमानि व ते रत्नभाजनानि पिवनभाजनानि पितरे प्रेषितानि त्वं तावद्यथाभिप्रायं पूर्वं गृह्णथ पश्चादन्यासां देवीनां दीष्यति सर्वासां च अन्तःपुरिकानां यथाभिप्रेतं गृह्णाहि ॥ सा दानि सुदर्शना यं तत्र सर्वशोभनं सुकृतं च सुनिष्ठितं आकारवन्तं तं गृह्णामि त्ति यावत्पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्यैतं कर्मन्ति । सा दानि तं मेल्लित्वा अन्यानि प्राकृतशिल्पिकेन कृतकानि गृह्णाति ॥ सा दानि सुदर्शना ताये मातये भगिनीहि

1. BC °bhanâ çi° C °lpikâ yo i ° çâni ratanâni ka° B °roti | yâ° C °roti | yâ pi a ° pûrvâṇi sarvâṇi sarve° B °rvâṇi sarve°. — 2. C °kuço sva° BC °khati | ya°. — 4. C °yâni bhâṁja° B °nâni | yaṁ° C °ṇi niççitâni tena ca tambakâramaha° B °tena ca taṭṭakârasya maha°. — 5. C °çena bhâṇḍâni kritâni dri°.

6. C °çâni imâni ratna ° mâni âryyaputreṇa kri°. — 8. C °ndrako tâni ca ratanabhâṁjanâ°. — 9. BC °veçatha mahâdevînâṁ dhî° C °dhituṁç ca me su° BC °pûrve detha | paççâ° C °rânâṁ devî ° nâṁ vâ | B °rikânâṁ vâ te°. — 10. B °rshavarânâṁ kâṁ° C °rshavarâ kâṁcukîyehi tâni ca ratanabhâṁjanâni antapu ° devîyaṁ u°.

12. B devî i° C °imâni ratanabhâṁjanâni râjño pre° BC °dhitâni ca te su ° rvaṁ grihnantu° B °vinâṁ dashyati | sa° BC °sâṁ antaḥ°. — 14. C °vucyati bha ° ntaḥpûrikâ°. — 15. B °imâni ca te° C °imâni ratna° C °tnabhâṁjanâni pibanaṁbhâṁjanâni pita° C °yathâbhipretaṁ pû° BC °rvaṁ grihnatha° C °nyâsâṁ tân devî° B °shyati | sa ° nâṁ yatobhipre° BC °taṁ grihnâhi ||.

17. C °bhanaṁ kritaṁ ca suniççitaṁ âkâravantaṁ grihnâminti | yâ° B °grihnâminti yâ°. — 19[1]. BC °ti ku°. — 19[2]. C °syaivaṁ ka°. — 19[3]. C °dâni tasya me ° nyâni prâkritakâni çi ° na kritâni kritâni grihnâni | B °gribnâti ||.

च अन्तःपुरिकाहि च वुच्चति वर्षवरेहि च कांचुकीयेहि च ॥ सुदर्शने किं त्वं एदृशकानि दर्शनीयानि रतनभाजनानि सर्वशोभनानि मेल्लित्वा अन्यानि प्राकृतकानि गृह्णासि ॥ सा दान्याह ॥ अलं मे एतेन एतमेव मे भवतु ॥ यस्तत्र रहस्यं तन्न कस्यचि आचिक्षति ॥

सो दानि राजा कुशो तट्टकारस्य मूले वसित्वा अर्थं नोपलभति । ततो निर्धावित्वा सुवर्णकारमहत्तरस्य मूले अल्लीनो । तत्रापि राजआणत्तिकाये अन्तःपुरस्य अर्थाये नानाप्रकाराणि सुवर्णाभरणानि क्रियन्ति मूर्धापिधाना पि क्रियन्ति पादास्तरणानि पि क्रियन्ति सुवर्णमाला पि क्रियन्ति किलंजका पि क्रियन्ति वेठका पि क्रियन्ति मणिकुण्डला पि क्रियन्ति करण्डा पि क्रियन्ति मुखफुल्लका पि क्रियन्ति बिम्बा पि क्रियन्ति पारिहार्यका पि क्रियन्ति कटका पि क्रियन्ति श्रोणिभाण्डिका पि क्रियन्ति पादास्तरका पि क्रियन्ति नूपुरा पि क्रियन्ति पादाङ्गुलिवेठका पि क्रियन्ति ॥ सो दानि राजा कुशो तादृशानि सुवर्णाभरणानि करोति उदाराणि कल्याणानि सुकृतानि सुनिष्ठितानि सुनिर्वायन्तानि सुनिर्वान्तमलकषायाणि मृदूनि कर्मनियानि प्रभास्वराणि तादृशानि करोति यथा ते सुवर्णकारा सर्वे दृष्ट्वा विस्मयमापन्नाः । अहो कल्याणाचार्यपुत्रो शोभनो शिल्पिको यो इमानि एदृशानि सुवर्णाभरणानि सुकृतानि सुनिष्ठितानि आकारवन्ता[251a]नि करोति यथास्माभिः न कदाचि दृष्टपूर्वाणि । सर्वेषु च राजा कुशः स्वं नामकं संज्ञामात्रकेन लिखति यथा सुदर्शना जानेया कुशस्येतं कर्मन्ति ॥ तेहि दानि सुवर्णकारेहि यं काले

1. BC °nîyâni(B °ni | ) imâni edriçâni ratanabhâ(C °bhâñ)ja° C °grihnesi | B °grihnâsi | . — 3². C °tena etadaitam̃ me bha° B °tam evam̃ me bhavatu ya°. — 3³. C °sya cid âcikshati | B °kshasi | . — 5¹. C °ço tambakârasya° BC °vaçitvâ° B °artha no° C °labhyate | . — 5². BC °llîno ta°.

6. BC °râjâ âṇatti(B °rtti)kâye antaḥ° C °bharaṇâni kriyanti mû ° staronikâ pi kriyanti suvarṇṇamâlâ pi kriyanti karam̃kam̃jarâ pi kriyanti veṭṭakâ pi kriyanti maṇi° B °mâlâ pi kriyanti karam̃jakâ pi kriyanti veṭakâ pi kriyanti maṇi° BC °karantâ pi kriyanti mu ° bimbâ pi kriyanti(C °yati) pârihârakâ pi kriyanti kaṭakâ pi kriya(C °kriyam̃)nti çroṇibhaṇḍâ (B °bhaṇḍikâ) pi kriyanti pâdâ(C °da)starakâ pi kriyanti ne(C °no)pu ° ṅgulaveṭakâ pi°.

12. C °bharaṇâni karonti | udârâṇi sukritâni kalyâṇâni suniççitâni sunivâyantâni sunivântavantamalakapâyâni mriduṇi karmâṇiyâni prabhâ° B °shṭhitâni sunirvâpantâni sunirvântavantamalakashâyâṇi mriduni karmâṇiyâni prabhâsvarâni tâdriçâni karoti | te suvarṇna° C °roti | te suvarṇṇâkârâ° BC °sarve yathâ dri° C °panno aho°. — 15. B °çilpako yânimâni e° C °çilpako yo yânîmâni e ° kritâni suniççitâni âkâra° B °kritâni sunishṭitâni âkâravantâni karokaroti | yadâsmâ° C °ti | yadâ 'smâbhiḥ na kadacid drishṭa° BC °rvâṇi sarve°.

17. C °kuço svam̃° BC °khati | ya°. — 18. C °varṇṇâkâre ° ṇâni suniççitâni te sarva râ° B °ṇâni nishṭitâni tam̃° C °ndrakasya allipitâni | B °sya allapi(*ou* °yi)tâni | .

आभरणानि निष्ठितानि तं सर्वं राज्ञो महेन्द्रस्य अल्लीपितं ॥ सो दानि राजा यानि कुशेन राज्ञा आभरणानि कृतकानि दृष्ट्वा विस्मयमापन्नः अहो यादृशानीमानि आभरणानि सुकृतानि सुनिष्ठितानि शोभनानि कुशलेनाचार्यपुत्रेण कृतकानि ॥ सो दानि राजा महेन्द्रको तान्याभरणानि वर्षवराणां कांचुकीयानां च हस्ते प्रेषति ॥ गच्छथ इमान्याभरणानि महादेवीये सुदर्शनाये च यथाभिप्रेतं पूर्वं देथ पश्चादपराणां देवीनां देथ सर्वासां च अन्तःपुरिकानां देथ ॥ ते दानि वर्षवरा कांचुकीया च तान्याभरणानि राजकुलं प्रवेशित्वा महादेवीय सुदर्शनाय च उपनामेन्ति ॥ देवि इमन्ते सुवर्णाभरणं राज्ञा प्रेषितं । त्वं च धीता च ते सुदर्शना यथाभिप्रेतं पूर्वं गृह्णथ । पश्चादपराणां देवीनां दीष्यति सर्वासां च अन्तःपुरिकानां ॥ सा दानि सुदर्शना तेषां सुवर्णाभरणानां यं तत्र सर्वशोभनं सुकृतं सुनिष्ठितं आकारवन्तं गृह्णामि त्ति यावत्पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्येतं कर्मन्ति । सा दानि तं मेल्लित्वा प्राकृतकानि कुशिल्पिकृतानि गृह्णाति ॥ सा दानि सुदर्शना मातये वुच्चति भगिनीहि च अन्तःपुरिकाहि च वर्षवरेहि च कांचुकीयेहि च ॥ सुदर्शने किं त्वं एवं विपरीतिका यानीमानि सर्वशोभनानि सुवर्णाभरणानि सुकृतानि सुनिष्ठितानि आकारवन्तानि कुशलेनाचार्यपुत्रेण कृतानि तानि मेल्लित्वा अन्यानि प्राकृतकानि कुशिल्पिककृतानि गृह्णसि ॥ सुदर्शना आह ॥ अलं मे एतेन इममेव मे भवतु ॥ यन्तत्र रहस्यं तन्न कस्यचिदाचिक्षति ॥

सो दानि राजा कुशो सुवर्णकारस्य मूले वसित्वा अर्थं नोपलभति । ततः निर्धावियान मणिकारमहत्तरकस्य मूले अल्लीनो । तत्रापि राजाज्ञप्तिकाये अन्तः-

1. BC °râjâ drishṭvâ yâni° C C °panno aho° B °kṛitâni munishṭhi° C °kṛitâni suvicitrâṇi ço°. — 4. C °ndraka nyâbharaṇâni vashavarâ° BC °rânâm̃ kâm̃° C °yâṇâm̃ haste preshitâ gaccha° B °shati ga°. — 5. BC gacchatha | i° C °rçanâyac ca yathâbhiprâyam̃ te pû° BC °vìnâm̃ detha | sarvâ° C °sâm̃ cântaḥ° BC °kânâm̃ detha(C °the) tâni va°.

6. BC tâni varsha° B °nti de°. — 8[2]. BC °rçane ya ° rvam̃ gṛihnatha | . — 9. C °rânâm̃ de ° sâm̃ cântaḥ°. — 10. C °kṛitam̃ sunishṭitam̃ âkâ° BC °gṛihnâminti(C °nti | ) yâ° C °yâvan paçya° BC °kam̃ tasyâ°.

12[1]. C °syedam̃ ka° B °nti sà dâ°. — 12[2]. BC °kâni çi° B °gṛihnitâni sâ dâ° C °gṛihitâni. — 13. C °nìhi cântaḥ° BC °yehi ca su°. — 14. BC °rîtikâ | yânimâ(C °nisà)ni sarvaçobhanâni suvarṇṇâ(C °rṇṇaâ)bharaṇâni sukṛitâni sunishṭi(C °niçci)tâni â° C °ṇa kṛitâni me ° lpikakṛitakâni gṛi° BC °gṛihnasi ‖ .

17[2]. BC °imam evam̃ me bha°. — 17[3]. C yam̃ raha°. — 19[1]. BC °suvarṇṇâkâ ° le vaçitvâ° C °labhyati ‖ B °bhati tataḥ°. — 19[2]. C tato ni°. — 20. C °pi râjâ âṇa° BC °muktimaṇivai° C °pravârasphaṭikamusâgalvâ° B °hitikâhâro pi kriyantu arddhahâro pi kriyanti maṇiku° C °hitikâhârâ pi kriyanti maṇikuṇḍalâ pi kriyanti maṇivalapâ pi kriyanti ratana-

पुरस्य अर्थाये नानाप्रकाराणि आभरणानि क्रियन्ति मुक्तामणिवैडूर्यशंखशिलाप्रवालस्फटिकमुसारगल्वलोहितिकाहारा पि क्रियन्ति अर्धहारा पि क्रियन्ति मणिकुण्डला पि क्रियन्ति मणिवक्कला [251b] पि क्रियन्ति रत्नमयानि मूर्धपिधानानि अङ्गदानि पि क्रियन्ति केयूराणि पि क्रियन्ति मेखला रत्नामयानि क्रियन्ति ॥ सो दानि राजा कुशो तादृशानि मणिआभरणानि सुकृतानि सुनिष्ठितानि आकारवन्तानि करोति यथा सर्वे ते मणिकारा दृष्ट्वा विस्मयमापन्नाः । अहो कल्याणाचार्यपुत्रः शोभनो शिल्पिको यो इमानि ईदृशानि आभरणानि सुकृतानि सुनिष्ठितानि आकारवन्ता करोति ये अस्माभिरदृष्टपूर्वा । सर्वेषु च राजा कुशो स्वकं नामकं संज्ञामात्रकेन लिखति यथा सुदर्शना जानेया कुशस्यैतं कर्मन्ति ॥ तेहि दानि मणिकारेहि यं कालं आभरणानि निष्ठितानि तं वेलं राज्ञो महेन्द्रकस्य अल्लीपितानि ॥ सो दानि राजा यानि कुशेनाभरणानि कृतानि दृष्ट्वा विस्मयमापन्नः । अहो कल्याणाचार्यपुत्रो शोभनो शिल्पिको ॥ सो दानि राजा महेन्द्रको तान्याभरणानि वर्षवराणां कांचुकीयानां च हस्ते प्रेषित्वा । गच्छथ एतान्याभरणानि महादेवीय सुदर्शनाय च यथाभिप्रायं पूर्वं देथ पश्चादपराणां देवीनां सर्वासां च अन्तःपुरिकानां देथ ॥ ते दानि वर्षवरा कांचुकीया तान्याभरणानि राजकुलं प्रवेशित्वा महादेवीय सुदर्शनाय च उपनामयन्ति । देवि इमानि मण्याभरणानि राज्ञा प्रेषितानि त्वं च धीता च ते सुदर्शना यथाभिप्रेतं गृह्णथ । पश्चादपराणां देवीनां सर्वासां च अन्तःपुरिकानां दीष्यति ॥ सा दानि सुदर्शना तेषां मण्याभरणानां यं तत्र सर्वशोभनं सुकृतं सुनिष्ठितं आकारवन्तं तं गृह्णामि त्ति याव पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्यैतं कर्मन्ति ।

mayâṇi mûrddhnipidhâ° B °tnamayâṇi mû ° ṅgadânâ pi kri° C °keyûlâni pi kri° BC °mekharâ(C °râni) ratnâ° C °tnâmayâ pi kriyanti ‖ .

5. B °driçoni maṇi° BC °kṛitâni sunishṭi(C °niçci)tâni âkâ ° roti | yathâ° C °ṇikorâ dṛi ° pannâ aho° B °nnâḥ aho°.

6. B °mâni idṛi° C °mâni edṛiçâ° BC °kṛitâni sunishṭi(C °niçci)tâni â° C °ntâni karo° B °ronti | ye a° BC °rvâ sarve°. — 8. C °mâtreṇa li° BC °khati | ya°. — 10. C °ṇâni nirddhishṭâni tam̃ ve° B °ṇâni nishṭitâni tam̃ velam̃ râjñâ mahe°.

11. BC °râjâ dṛishṭhvâ yâ° C °ṇâni sukṛi ° panno aho° B °pannâḥ aho°. — 12¹. BC °çobhanâni çi° B °lpikâ | . — 12². C °preshati ga° B °shitâ ga°. — 13. BC gacchatha | e ° rvam̃ detha | paççâ° C °rvâsâ cântaḥ° BC °kânâm̃ ca detha | . — 15. C °upaṇâmenti | B °upanâmyanti | .

16. C °imâni maççâbharaṇâni yam̃ tra sarvaçobhanam̃ râjñâ° BC °gṛihnatha. — 18². C °ṇâni yam̃ tra rahasyam̃ sarva° BC °kṛitam̃ sunishṭi(C °niçci)tam̃ â° C °gṛihnamiti yâvat paçya° B °gṛihnâminti yâ ° çyati | ku ° kam̃ tasyâ°. — 20¹. BC °ti ku°. — 20². C °çasyedam̃ ka°.

सा दानि तं मेक्षित्वा अन्यानि प्राकृतकानि कुशिल्पिककृतानि गृह्णाति ॥ सा दानि सुदर्शना मातरे च वुच्चति भगिनीहि च अन्तःपुरिकाहि च वर्षवरेहि च कांचुकीयेहि च ॥ सुदर्शने किं त्वमेवं विपरीता या त्वमेदृशकानि मल्याभरणानि सुकृतानि सुनिष्ठितानि आकारवन्तानि कुशलशिल्पिककृतानि मेक्षित्वा अन्यानि प्राकृतकानि कुशिल्पिकृतानि गृह्णासि ॥ सा दानि सुदर्शना आह ॥ अलं मे एतेहि इममेव मे भवतु ॥ यन्तत्र रहस्यं तन्न कस्यचिदाचिक्षति ॥

सो दानि राजा कुशो मणिकारस्य मूले वसित्वा अर्थं नो[252a]पलभति । ततः निर्धावित्वा शंखवलयकारमहत्तरकस्य मूल अल्लीनो । तत्रापि राजाणत्तिकाये अन्तःपुरस्य अर्थाये नानाप्रकाराणि शंखगजदन्तमयानि आभरणानि भाजनानि पि क्रियन्ति । नागदन्तवलयका पि क्रियन्ति अंजनीया पि क्रियन्ति दन्तसमुद्गका पि क्रियन्ति रोचनपिशाचिका पि क्रियन्ति दन्तभृंगारका पि क्रियन्ति दन्तविहेठिका पि क्रियन्ति दन्तपादमया पि क्रियन्ति सींहका पि क्रियन्ति शंखका पि क्रियन्ति शंखशय्या पि क्रियन्ति शंखमयानि पि तैलभाजनानि गन्धभाजनानि वर्णकभाजनानि क्रियन्ति शंखमृणालका पि क्रियन्ति शंखमुद्गका पि क्रियन्ति शंखवलयका पि क्रियन्ति शंखमेखला पि क्रियन्ति शंखवोचका पि क्रियन्ति शंखशिबिका पि क्रियन्ति शंखचर्मका पि क्रियन्ति ॥ एवं नानाप्रकाराणि शंखगजदन्तमयानि भाजनानि आभरणानि च सुकृतानि सुनिष्ठितानि आकारवन्तानि करोति यथा सर्वे शंखगजदन्तकारका दृष्ट्वा विस्मयमापन्नाः । अहो कल्याणाचार्यपुत्रः शोभनो शिल्पिको यो इमानि एदृशानि शंखगजदन्तमयानि आभरणानि भाजनानि च करोति यं अस्माभिर्न दृष्टपूर्वाणि । सर्वेषु च राजा कुशो स्वकं नामकं संश्रा-

1[1]. BC °grihnâti | . — 1[2]. C °tare vu° BC °yehi ca su°. — 3. BC °kim̃ tvam̃m eca vipari(C °ri)tà yâ° C °driçàni° B °driçàkâni manyâ° C °ṇâni sukritâni suniççitâni â° B °çalaçilpakri° BC °grihnàsi | . — 5[2]. BC °imam evam̃ me bha°.

7. BC °vaçitvâ° C °artha nopalabhyati ‖ . — 8[1]. C tato ni°. — 8[2]. C °râjà âṇa ° prakâram̃ çam̃° B °prakâçitam̃ çam̃° C °ṇâni bhâm̃ja° B °kriyam̃ti | . — 10. C °am̃janakâ pi kriyanti dam̃ntasamudgatà pi kriyanti rocanapiçàcanakâ pi kriyanti dantabhrim̃° B °rocanapiçâcakâ pi kri° C °vihaṭhakâ pi kriyanti dantapâdakâma kriyanti sim̃° BC °sim̃hakâ (C °kàma) pi kriyanti çam̃khakànyapi kriyanti çam̃khakà pi kriyanti çam̃khaça° C °yyâ pi kriyanti | tailabhâm̃janàni gandhabhâm̃ja° BC °rṇṇabhâ(C °bhâm̃)janâni pi kriyanti çam̃khamriṇâ(B °khamunà)lakà pi kriyanti çam̃khavadga(C °vartta)kâ pi kriyanti(B °nti |) çam̃khavapakâ pi kriyanti çam̃khameshalâ(C °khalâ) pi kriyanti | (C °nti yanti) çam̃khavova(C °voca)kâ pi kriyanti çam̃khaçi°.

16. C °yâni bhâm̃ja° B °tàni ca su° C °kritàni ca suniççitàni â° BC °roti | ya° B °dantâkâraka drishṭvâ° C °pannâ aho°. — 18. B aho alyâ° C °putro ço ° driçâ çam̃ ° ṇâni bhâm̃ja° BC °roti | yam̃ a ° rvâṇi sarve°. — 20. C °trakena li° BC °khati | ya ° neyâ anyo jana(C °jano na) jâneyâ kuça°.

मात्रकेण लिखति यथा सुदर्शना जानेया कुशस्यैतं कर्मन्ति ॥ तेहि दानि शंखजदन्तकारेहि यं कालं सर्वाणि कृतानि यथाणत्तानि राज्ञो महेन्द्रकस्य उपनामितानि ॥ राजा तं कुशस्य कर्म दृष्ट्वा उदारशोभनं सुकृतं राजार्हं विस्मयमापन्नः । अहो यादृशानीमानि कुशलेनाचार्यपुत्रेण कृतानि ॥ कुमारामात्येहि पि अभिलक्षितानि राजपुरुषेहि पि अभिलक्षितानि कुशेन कृतानि शंखगजदन्तभाण्डानि दृष्ट्वा विस्मयमापन्नाः । इमानि कुशलेनाचार्यपुत्रेण कृतानि ॥ राज्ञा महेन्द्रेण वर्षवराणां कांचुकीयानां च हस्ते तान्याभरणानि भाजनानि च प्रेषितानि । गच्छथ अन्तःपुरं प्रवेशेथ महादेवीये धीतुश्च मे सुदर्शनाये यथाभिप्रायं प्रथमं देथ ततः पश्चादन्यासां देवीनामन्तःपुरिकानां च ॥ ते दानि वर्षवरा कांचुकीया तान्याभरणानि भाजनानि च गृह्य अन्तःपुरं प्रवेशितानि महादेवीये उ[252b]पनामितानि । देवि इमानि ते शंखगजदन्तमयानि आभरणानि भाजनानि च राज्ञा प्रेषितानि त्वं च धीता च ते सुदर्शना पूर्वं यथाभिप्रायं गृह्णथ पश्चादपराणां देवीनां दीष्यति सर्वासाश्च अन्तःपुरिकानां ॥ सा दानि सुदर्शना तानि शंखगजदन्तमयानि आभरणानि भाजनानि दृष्ट्वा यन्तेषां सुकृतं सुनिष्ठितं कल्याणं शोभनं कल्याणाचार्यपुत्रेण कृतकं दृष्ट्वा हस्ते प्रणामितं गृह्णीष्यन्ति यावत्पश्यति कुशस्य नामकं । तस्या एवं भवति । कुशस्यैतं कर्म ति । सा दानि तं मेल्लित्वा अन्यानि प्राकृतकानि कुशिल्पिकृतानि गृह्णाति ॥ सा दानि सुदर्शना मातरे वुच्चति भगिनीहि च अन्तर्पुरिकाहि च वर्षवरेहि च कांचुकीयेहि च वुच्चति ॥ सुदर्शने किं त्वं एदृशीका

1. C °dâni gaja ° ṇi kritâni sarvasyântaḥpurikâhi yathâ âṇattakâni râjño° B °kritâni sarvasya antaḥpurasya yathâ° BC °mitâni râjâ°. — 3. C °çobhaṇâni sukritam̃ râjâham̃ vi ° pannam̃ | B °nnaḥ aho°. — 4[1]. C °çâni imâ ° leṇâcâ ° treṇa sukri° BC °tâni kumâ°. — 4[2]. C °sheṇâpi a ° khadam̃tarâjabhâ° B °çam̃kharâjabhaṇḍâ° C °panno | .

6[1]. BC imena kuçe(C °çale)nâcâ ° treṇa tâni râ°. — 6[2]. C râjño maheṇa varsha ° ṇâni bhâm̃ja° BC °shitâni ca gaccha°. — 7. B gacchatha | antaḥ° C °veçatha | mahâ° BC °detha | ta° C °tato paççâ°. — 9. B °rshavarâṇâm̃ kâm̃° C °ṇâni bhâm̃ja° BC °pura prave° C °viya u° BC °mitâni devi°.

11. C °ṇâni bhâm̃janâni râjñâ° BC °grihnatha || paççâ ° shyati | sarvâ ° kânâm̃ sâ dâ°. — 13. BC °rçanâ mâtâye vuccati bhaginihi ca antaḥpurikâhi ca varshavarehi ca kâm̃cukiyehi vu(B °ru)ccati | imâni te sudarçane çam̃khagajadantamayâni âbharaṇâni ca bhâ(C °ni bhâm̃)janâni ca pitrâ preshitâni tvañ ca te (B °ñ ca mâtâ ca te) mahâdevî pûrve yathâbhiprâyam̃ grihnatha | paççâd aparâṇâm̃ devînâm̃(C °nâ) sarvâsâm̃ ca a(C °m̃ câ)ntaḥpurikâṇâm̃ dîshyati | sâ dâni sudarçanâ tâni çam̃° C °ṇâni bhâm̃ja ° kritam̃ suniççitam̃ kalyâṇam̃ ço ° câryyam̃pu° BC °hasto praṇâmi(B °mito) grihnishyan ti°.

16[1]. BC °ti ku°. — 16[2]. C °syaiva karmânti | . — 16[3]. C °kuçalaçilpakri° B °çilpakritâti grihnâti | Cc (*cf. in l.* 18) °grihnâni | . — 17. Cc °nihi ca varsha° B °rpurihi ca varsha°. — 18. Cc °driçâni viparitikâni imâ° C °çobhanâni kritâni sukritâni su° c °ço-

विपरीतिका यानि इमानि सर्वशोभनानि सुकृतानि सुनिष्ठितानि आकारवन्तानि कल्याणाचार्यपुत्रेण कृतकानि मेल्लित्वा अन्यानि प्राकृतकानि कुशिल्पिककृतानि गृह्णासि । किमिमानि सर्वशोभनानि न गृह्णासि ॥ सा दानि सुदर्शना आह ॥ अलं मे एतेहि एतमेव मे भवतु ॥ यं तत्र रहस्यं तन्न कस्यचि आचिक्षति ॥

सो दानि राजा कुशो शंखदन्तकारस्य मूले वसित्वा विशेषं नोपलभति । ततः निर्धावियान जन्तकारस्य मूले अल्लीनो । तत्र राजाणत्तिकाये अन्तःपुरस्य अर्थाये नानाप्रकाराणि जन्तमाष्टदण्डकानि क्रियन्ति । क्रीडापनकानि च विविधानि च जन्तमाष्टकानि क्रियन्ति । वीजनकानि पि जन्तमाष्टानि क्रियन्ति । तालवष्टकानि पि मोरहस्तका पि पादफलका पि आसन्दिका पि जन्तमाष्टपादका महाशालिका पि यन्तमाष्टकानि कंकणका पि यन्त्रमाष्टका । नानाप्रकाराणि च पक्षिणो यन्त्रमाष्टकानि क्रियन्ति शुका पि जन्तमाष्टका शारिका पि कोकिला पि हंसा पि मयूरा पि शतपत्त्रा पि कारंद[253$^{a}$]वा पि मोरम्बा पि जीवंजीवका पि तैलकुण्डिका च यन्त्रमाष्टका क्रियन्ति । नानाप्रकारं च फलाफलं यन्त्रमाष्टका क्रियन्ति । भव्यानि च दाडिमानि च मातुलुंगानि च वीरसेनकानि च द्राक्षालतिका च आम्राणि च जाम्बूनि च पिप्पलानि च कपित्थानि च नालीकेराणि च पनसानि च क्षीरिकानि च नीपानि च कदम्बानि च खर्जरलतिका च । एवं नानाप्रकाराणि यन्त्रमाष्टमाण्डानि क्रियन्ति ॥ सो दानि राजा कुशो तादृशानि

bhanâni sukṛitânishṭitâni â° BC °sunishṭitâni â° C °putreṇa kṛitâni me° C °gṛihnâni | sâ dâni (*ci-dessus l.* $16^3$) °gṛihnâsi | (*cette répétition est désignée par* c) Bc °gṛihnâsi | .

$4^1$. BC °hi etam evaṁ me bhavatu yaṁ ta°. — $4^2$. C °tan nâ kasyacid âcikshati || B °syacikshati || . — $5^1$. B sâ dâ ° ntasya kârasya mû° BC °vaçitvâ° C °shaṁ arthaṁ nopalabhyati || . — $5^2$. C tato ni ° yâna yantrakâ° B °no ta°.

6. B tataḥ râ° C tato râjâṇahitâye a ° rasyârthâ ° ṇi yantramashṭa° B °ntamashṭhada°. — 7. B °ntamashṭhakâni ca kri° C °shṭakâni ca kriyanti. — $8^1$. C °kâni ca jantamâshṭa kri° B °ntamâni kri°. — $8^2$. C tâlakaṇṭhakâ pi pâdaphullakâni pi â° B tâlavaṇṭhakâni pi mo ° stakâ pi pâdaphullakâni pi âsandikâ pi jantamâshṭhapâdakâ mahâ ° ntamâshṭhakâni kaṁ° C °likâ pi jantramâshṭakâ pi uccâni pi jantramâshṭakâni kaṁ° BC °kaṁkanakâ(C °kâni) pi ya(C °ja)ntramâshṭakâ | . — 10. C °ṇo jantra° BC °çukâ pi janta(C °ntra)mâshṭhakâ pi çâlikâ pi ko° C °haṁsamayurâ pi çatapatrâ pi kâraṇḍavâ pi mo° B °trâ pi karaṁdakâ pi mo ° vakâ pi telaku° C °tailakuṁṇḍikâ ca jantra° B °ntramâshṭhakâ kri°.

13. C °prakârakâlaṁ ca phalâphalaṁ jantra ° kâni kri°. — 14. C bhavyâṇi cûḍâdimâni ca mâtu ° rasanakâni ca drâkshâratikâni ca â° BC °mrâṇi ca jâṁbûni ca pipâ(C °piçâ)lâ° C °kelâni ca panasâni ca kadambâ° B °kerâṇi ca panasoni ca kshî ° mbâni ca kharjjuralatikâ ca || C °kharjjurakâni ca | .

16. C °ṇi jantra° B °shṭabhaṇḍâ° C °ni kriyanti | . — 17. C °râja ku ° çâni jantra° BC °ntramâshṭhabhaṇḍâni sukṛitâni sunishṭi(C °niçci)tâni â° B °roti yantre sarve jantukâra° C °yaṁ te jantra° BC °smitâ aho°.

